महाकविश्रीकालिदासविरचितं

# कुमारसंभवम्

( प्रथमतोऽष्टमसर्गावधि )

मल्लिनाथकृतसञ्जीविनीटीकया,

( अष्टमसर्गतः सप्तदशसर्गावधि )

सीतारामकृतसञ्जीविनीटीकया,

कुमारसंभव - महाशिवपुराणसाम्यनिदर्शकसन्दर्भेण

पाठान्तरादिभिश्च समलङ्कृतम्




तस्येदम्

चतुर्दशं संस्करणम्

श्रीमदिन्दिराकान्ततीर्थचरणान्तेवासिभिः

**नारायण राम आचार्य "काव्यतीर्थ"**

इत्येतैः पाठान्तर-टिप्पण-सन्दर्भादिभिः समलङ्कृत्य संशोधितम्

शकाब्दाः १८७७ : सनाब्दाः १९५५

निर्णयसागर-मुद्रणालयम्, मुंबई २

# कुमारसम्भव - महाशिवपुराणयोः

## साम्यनिदर्शकः संदर्भः

While preparing the Mss. of this edition, all of a sudden it dawned upon me that some of the lines and a few passages in the work were reminiscent of *Mahāṣivapurāṇa*. With this cue I explored the M.S.P., and to my surprise I discovered quite a number of lines and passages identical with *Kumārasambhava* proving without doubt that at least one of the two authors had the other's work as his basis. Here I lay down, for those interested, the result of my humble research.

N. R. Acharya

| कुमारसंभवम् | महाशिवपुराणम्<br>( पार्वतीखण्डम् ) |
|---|---|
| | नारद उवाच— |
| | ब्रह्मन्विधे महाप्राज्ञ ! वद मे वदतां वर ! । |
| | मेनकायाः समुत्पत्तिं विवाहं चरितं तथा । |
| | ब्रह्मोवाच— |
| | शृणु त्वं नारद मुने ! पार्वतीमातुरुद्भवम् । |
| | विवाहं चरितं चैव पावनं भक्तिवर्धनम् । |
| अस्त्युत्तरस्यां दिशि देवतात्मा | अस्त्युत्तरस्यां दिशि वै गिरीशो हिमवान्महान् । |
| हिमालयो नाम नगाधिराजः । | पर्वतो हि मुनिश्रेष्ठ ! महातेजाः समृद्धिभाक् । |
| | द्वैरूप्यं तस्य विख्यातं जङ्गमस्थिरभेदतः । |
| | वर्णयामि समासेन तस्य सूक्ष्मस्वरूपकम् । |
| पूर्वापरौ तोयनिधी वगाह्य | पूर्वापरौ तोयनिधी सुविगाह्य स्थितो हि यः । |
| स्थितः पृथिव्या इव मानदण्डः । | नानारत्नाकरो रम्यो मानदण्ड इव क्षितेः । |
| यश्चाप्सरोविभ्रममण्डनानां | नानावृक्षसमाकीर्णो नानाशृङ्गसुचित्रितः । |
| संपादयित्रीं शिखरैर्बिभर्ति । | सिंहव्याघ्रादिपशुभिः सेवितः सुखिभिः सदा । |

बलाहकच्छेदविभक्तरागा-
मकालसन्ध्यामिव धातुमत्ताम् ।
पदं तुषारस्रुतिधौतरक्तं
यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तै-
र्मुक्ताफलैः केसरिणां किराताः ।
स मानसीं मेरुसखः पितॄणां
कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीया-
मात्मानुरूपां विधिनोपयेमे ।

तुषारनिधिरत्युग्रो नानाश्चर्यविचित्रितः ।
देवर्षिसिद्धमुनिभिः संश्रितः शिवसंप्रियः ।
तपःस्थानोऽतिपूतात्मा पावनश्च महात्मनाम् ।
तपःसिद्धिप्रदोऽत्यंतं नानाधात्वाकरः शुभः ।
स एव दिव्यरूपो हि रम्यः सर्वाङ्गसुन्दरः ।
विष्णवंशोऽविकृतः शैलराजराजसताम्प्रियः ।
कुलस्थित्यै च स गिरिर्धर्मवर्धनहेतवे ।
स्वविवाहं कर्तुमैच्छत्पितृदेवहितेच्छया ।
स्मृत्वा शापं सुतानां च प्रोचुरोमिति तद्वचः ।
ददुर्मेनां सुविधिना हिमागाय निजात्मजाम् ।
समुत्सवो महानासीत्तद्विवाहे सुमङ्गले ।
कालक्रमेणाऽथ तयोः प्रवृत्ते सुरते मुने ! ।
गर्भो बभूव मेनाया ववृधे प्रत्यहं च सः ।

कालक्रमेणाथ तयोः प्रवृत्ते
स्वरूपयोग्ये सुरतप्रसङ्गे ।
मनोरमं यौवनमुद्वहन्त्या
गर्भोऽभवद्भूधरराजपत्न्याः ।
असूत सा नागवधूपभोग्यं
मैनाकमम्भोनिधिबद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्रा-
ववेदनाज्ञं कुलिशक्षतानाम् ।

असूत सा नागवधूपभोग्यं सुतमुत्तमम् ।
समुद्रबद्धसतसख्यं मैनाकाभिधमद्भुतम् ।
वृत्रशत्रावपि क्रुद्धेऽवेदनाज्ञं सपक्षकम् ।
पविक्षतानां देवर्षे ! पक्षच्छिदि वरांगकम् ।

अथावमानेन पितुः प्रयुक्ता
दक्षस्य कन्या भवपूर्वपत्नी ।
सती सतीयोगविसृष्टदेहा
तां जन्मने शैलवधूं प्रपेदे ।

सा भूधराणामधिपेन तस्यां
समाधिमत्यामुदपादि भव्या ।

ब्रह्मोवाच—

अथ संस्मरतुर्भक्त्या दम्पती तौ भवाम्बिकाम् ।
प्रसूतिहेतवे तत्र देवकार्यार्थमादरात् ।
ततः सा चण्डिका योगात्त्यक्तदेहा पुरा पितुः ।
ईहया भवितुं भूयः समैच्छद्गिरिदारतः ।
ततो गिरिः स्वप्रियायां परिपूर्णं शिवांशकम् ।
समाधिमत्त्वात्समग्रे समधत्त सुशङ्करे ।

सम्यक्प्रयोगादपरिक्षतायां
नीताविवोत्साहगुणेन संपत् ।

प्रसन्नदिक्पांसुविविक्तवातं
शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजंगमानां
सुखाय तज्जन्मदिनं बभूव ।

तया दुहित्रा सुतरां सवित्री
स्फुरत्प्रभामण्डलया चकासे ।
विदूरभूमिर्नवमेघशब्दा-
दुद्भिन्नया रत्नशलाकयेव ।

दिने दिने सा परिवर्धमाना
लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान्विशेषा-
ञ्ज्योत्स्नान्तराणीव कलान्तराणि ।
तां पार्वतीत्याभिजनेन नाम्ना
बन्धुप्रियां बन्धुजनो जुहाव ।
उमेति मात्रा तपसो निषिद्धा
पश्चादुमाख्यां सुमुखी जगाम ।
महीभृतः पुत्रवतोऽपि दृष्टि-
स्तस्मिन्नपत्ये न जगाम तृप्तिम् ।

समधत्त गिरेः पत्नी गर्भं देव्याः प्रसादतः ।
चित्ते स्थितायाः करुणाकरायाः सुखदं गिरेः ।
तदा सुसमयश्चासीच्छान्तभग्रहतारकः ।
नभः प्रसन्नतां यातं प्रकाशः सर्वदिक्षु हि ।
मही मंगलभूयिष्ठा सवनग्रामसागरा ।
सरः स्रवन्तीवापीषु पुफुल्लुः पङ्कजानि वै ।
ववुश्च विविधा वाताः सुखस्पर्शा मुनीश्वर ! ।
मुमुदुः साधवः सर्वेऽसतां दुःखमभूद्द्रुतम् ।
अर्धरात्रे समुत्पन्ना गंगेव शशिमण्डलम् ।
समये तत्स्वरूपेण मेनकाजठराच्छिवा ।
समुद्भूय समुत्पन्ना सा लक्ष्मीरिव सागरात् ।
अनुकूलो ववौ वायुर्गम्भीरो गंधयुक् शुभः ।
निशीथदीपा विहतत्विष आसन्नरं मुने ! ।
श्रुत्वा तद्रोदनं रम्यं गृहस्थाः सर्वयोषितः ।
जहृषुः सम्भ्रमात्तत्रागताः प्रीतिपुरःसराः ।
तच्छुद्धान्तचरः शीघ्रं शशंस भूभृते तदा ।
पार्वतीजन्म सुखदं देवकार्यकरं शुभम् ।
तत्र सा ववृधे देवी गिरिराजगृहे शिवा ।
गंगेव वर्षासमये शरदीवाथ चंद्रिका ।
एवं सा कालिका देवी चार्वंगी चारुदर्शना ।
दध्रे चानुदिनं रम्यां चंद्रबिम्बकलामिव ।
कुलोचितेन नाम्ना तां पार्वतीत्याजुहाव ह ।
बन्धुप्रियां बन्धुजनः सौशील्यगुणसंयुताम् ।
उमेति मात्रा तपसो निषिद्धा कालिका च सा ।
पश्चादुमाख्यां सुमुखी जगाम भुवने मुने ! ।
दृष्टिः पुत्रवतोऽप्यद्रेस्तस्मिंस्तृप्तिं जगाम न ।

अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ।
प्रभामहत्या शिखयेव दीप-
स्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी
तथा स पूतश्च विभूषितश्च ।

अपत्ये पार्वतीत्याख्ये सर्वसौभाग्यसंयुते ।
मधोरनन्तपुष्पस्य चूते हि भ्रमरावलिः ।
विशेषसंगा भवति सहकारे मुनीश्वरः ।
प्रभामहत्या शिखयेव दीपो भवनस्य च ।
त्रिमार्गयेव सन्मार्गस्तद्वद्गिरिजया गिरिः ।
पूतो विभूषितश्चापि स बभूव तया गिरिः ।

मन्दाकिनीसैकतवेदिकाभिः
सा कन्दुकैः कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां
क्रीडारसं निर्विशतीव बाल्ये ।

संस्कारवत्यैव गिरा मनीषीव हिमालयः ।
गंगासैकतवेदीभिर्बाल्ये रेमे मुहुर्मुहुः ।
कन्दुकैः कृत्रिमैः पुत्रैः सखीमध्यगता च सा ।

तां हंसमालाः शरदीव गङ्गा
महौषधिं नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले
प्रपेदिरे प्राक्तनजन्मविद्याः ।

अथ देवी शिवा सा चोपदेशसमये मुने ! ।
पपाठ विद्याः सुप्रीत्या यतचित्ता च सद्गुरोः ।
प्राक्तना जन्मविद्यास्तां शरदीव प्रपेदिरे ।
हंसालिः स्वर्णदीनक्तमात्मभासो महौषधिम् ।

मध्येन सा वेदिविलग्नमध्या
वलित्रयं चारु बभार बाला ।
आरोहणार्थं नवयौवनेन
कामस्य सोपानमिव प्रयुक्तम् ।
अन्योन्यमुत्पीडयदुत्पलाक्ष्याः
स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।
मध्ये यथा श्याममुखस्य तस्य
मृणालसूत्रान्तरमप्यलभ्यम् ।

बिभ्रतीं क्षीणमध्यां च त्रिवलीमध्यराजिताम् ।
स्थलपद्मप्रतीकाशपादयुग्मविराजिताम् ।

मृणालायतपर्यन्तबाहुयुग्ममनोहराम् ।
राजीवकुड्मलप्रख्यौ घनपीनौ दृढस्तनौ ।

**ब्रह्मोवाच—**

एकदा त्वं शिवज्ञानी शिवलीलाविदां वरः ।
हिमाचलगृहं प्रीत्याऽगमस्त्वं शिवप्रेरितः ।

दृष्ट्वा मुने ! गिरीशस्त्वां नत्वानर्चे स नारदः ।
आहूय च स्वतनयां त्वदङ्घ्र्योस्तामपातयत् ।
पुनर्नत्वा मुनीश ! त्वामुवाच हिमभूधरः ।

**हिमालय उवाच—**

हे मुने ! नारद ! ज्ञानिन्ब्रह्मपुत्रवर प्रभो ! ।
मत्सुताजातकं ब्रूहि गुणदोषसमुद्भवम् ।
कस्य प्रिया भाग्यवती भविष्यति सुता मम ? ।

**ब्रह्मोवाच—**

इत्युक्तो मुनिवर्य ! त्वं गिरीशेन हिमाद्रिणा ।
विलोक्य कालिकाहस्तं सर्वाङ्गं च विशेषतः ।
अवोचस्त्वं गिरिं तात ! कौतुकी वाग्विशारदः ।
ज्ञानी विदितवृत्तान्तो नारदः प्रीतमानसः ।

**नारद उवाच—**

एषा ते तनया मेने सुधांशोरिव वर्धिता ।
आद्या कला शैलराज ! सर्वलक्षणशालिनी ।
स्वपतेः सुखदात्यन्तं पित्रोः कीर्तिविवर्धिनी ।
सुलक्षणानि सर्वाणि त्वत्सुतायाः करे गिरे ! ।
एका विलक्षणा रेखा तत्फलं शृणु तत्त्वतः ।
योगी नग्नोऽगुणोऽकामी मातृतातविवर्जितः ।
अमानोऽशिववेषश्च पतिरस्याः किलेदृशः ।

तां नारदः कामचरः कदाचि-
त्कन्यां किल प्रेक्ष्य पितुः समीपे ।
समादिदेशैकवधूं भवित्रीं
प्रेम्णा शरीरार्धहरां हरस्य ।

**ब्रह्मोवाच—**

इत्याकर्ण्य वचस्ते हि सत्यं मत्वा च दम्पती ।
मेना हिमाचलश्चापि दुःखितौ तौ बभूवतुः ।
उवाच दुःखितः शैलस्त्वां तदा हृदि नारद ! ।
किमुपायं मुने ! कुर्यामतिदुःखमभूदिति ।

**नारद उवाच—**

स्नेहाच्छृणु गिरे ! वाक्यं मम सत्यं मृषा न हि ।

गुरुः प्रगल्भेऽपि वयस्यतोऽस्या-
स्तस्थौ निवृत्तान्यवराभिलाषः ।
ऋते कृशानोर्न हि मन्त्रपूत-
मर्हन्ति तेजांस्यपराणि हव्यम् ।

करेखा ब्रह्मलिपिर्न मृषा भवति ध्रुवम् ।
तादृशोऽस्याः पतिः शैल ! भविष्यति न संशयः ।
तादृशोऽस्ति वरः शम्भुर्लीलारूपधरः प्रभुः ।
कुलक्षणानि सर्वाणि तत्र तुल्यानि सद्गुणैः ।
प्रभौ दोषो न दुःखाय दुःखदोऽस्य प्रभौ हि सः ।
रविपावकगङ्गानां तत्र ज्ञेया निदर्शना ।
तस्माच्छिवाय कन्यां स्वां शिवां देहि विवेकतः ।

**हिमालय उवाच—**

हे मुने नारद ! प्राज्ञ ! विज्ञप्तिं कांचिदेव हि ।
करोमि तां शृणु प्रीत्यातस्त्वं प्रमुदमावह ।
श्रूयते त्यक्तसंगः स महादेवो यतात्मवान् ।
तपश्चरति सन्नित्यं देवानामप्यगोचरः ।
स कथं ध्यानमार्गस्थः परब्रह्मार्पितं मनः ।
भ्रंशयिष्यति देवर्षे ! तत्र मे संशयो महान् ।
अतः पश्यति सर्वत्र न तु बाह्यं निरीक्षते ।
इति स श्रूयते नित्यं किन्नराणां मुखान्मुने ! ।

अयाचितारं न हि देवदेव-
मद्रिः सुतां ग्राहयितुं शशाक ।
अभ्यर्थनाभङ्गभयेन साधु-
र्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ।

**नारद उवाच—**

न वै कार्या त्वया चिंता गिरिराज ! महामते।
एषा तव सुता काली दक्षजा ह्यभवत्पुरा ।
सती नामाभवत्तस्याः सर्वमङ्गलदं सदा ।
सती सा वै दक्षकन्या भूत्वा रुद्रप्रियाभवत् ।
पितुर्यज्ञे तथा प्राप्यानादरं शङ्करस्य च ।
तं दृष्ट्वा कोपमाधायात्याक्षीद्देहं च सा सती ।
पुनः सैव समुत्पन्ना तव गेहेऽम्बिका शिवा ।
पार्वती हरपत्नीयं भविष्यति न संशयः ।

यदैव पूर्वे जनने शरीरं
सा दक्षरोषात्सुदती ससर्ज ।
तदाप्रभृत्येव विमुक्तसङ्गः
पतिः पशूनामपरिग्रहोऽभूत् ।

**ब्रह्मोवाच—**

वर्धमाना गिरेः पुत्री सा शक्तिर्लोकपूजिता ।
अष्टवर्षा यदा जाता हिमालयगृहे सती ।

तज्जन्म गिरिशो ज्ञात्वा सतीविरहकातरः ।
कृत्वा तामद्भुतामन्तर्मुमोदातीव नारद ! ।

स कृत्तिवासास्तपसे यतात्मा
गङ्गाप्रवाहोक्षितदेवदारु ।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि
किंचित्क्वणत्किंनरमध्युवास ।

तस्मिन्नेवान्तरे शंभुर्लौकिकीं गतिमाश्रितः ।
समाधातुं मनः सम्यक्तपः कर्तुं समैच्छत ।
कांश्चिद्गणवराञ्छान्तान्नंद्यादीनवगृह्य च ।
गङ्गावतारमगमद्धिमवत्प्रस्थमुत्तमम् ।

तत्राग्निमाधाय समित्समिद्धं
स्वमेव मूर्त्यन्तरमष्टमूर्तिः ।
स्वयं विधाता तपसः फलानां
केनापि कामेन तपश्चचार ।

तपःप्रारम्भमकरोत्स्थित्वा तत्र वशी हरः ।
एकाग्रं चिंतयामास स्वमात्मानमतंद्रितः ।

अनर्घ्यमर्घ्येण तमद्रिनाथः
स्वर्गौकसामर्चितमर्चयित्वा ।
आराधनायास्य सखीसमेतां
समादिदेश प्रयतां तनूजाम् ।

**हिमालय उवाच—**

शृणु त्वं मेनके देवि ! यथार्थं वच्मि तत्त्वतः ।
भ्रमं त्यज मुनेर्वाक्यं वितथं न कदाचन ।
यदि स्नेहः सुतायास्ते सुतां शिक्षस्व सादरम् ।
तपः कुर्याच्छंकरस्य सा भक्त्या स्थिरचेतसा ।

प्रत्यर्थिभूतामपि तां समाधेः
शुश्रूषमाणां गिरिशोऽनुमेने ।
विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि त एव धीराः ।

**हिमालय उवाच—**

पूजितोऽसि जगन्नाथ ! मया त्वं परमेश्वर ! ।
स्वागतेनाद्य विषये स्थितं त्वां प्रार्थयामि किम् ! ।
इममेवं महद्धैर्यं धीराणां सुतपस्विनाम् ।
विघ्नवन्त्यपि संप्राप्य यद्विघ्नैर्न विहन्यते ।

अवचितबलिपुष्पा वेदिसंमार्गदक्षा
नियमविधिजलानां
बर्हिषां चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा
तच्छिरश्चन्द्रपादैः ।

काली सखीभ्यां सहिता प्रत्यहं चंद्रशेखरम् ।
सेवमाना महादेवं गमनागमने स्थिता ।
प्रक्षाल्य चरणौ शंभोः पपौ तच्चरणोदकम् ।
वह्निशौचेन वस्त्रेण चक्रे तद्गात्रमार्जनम् ।

तस्मिन्विप्रकृताः काले
तारकेण दिवौकसः ।

अथ तद्बाधिता देवाः सर्वे शक्रपुरोगमाः ।
मुने ! मां शरणं जग्मुरनाथा अतिविह्वलाः ।

तुरासाहं पुरोधाय
धाम स्वायंभुवं ययुः ।

अथ ते निर्जराः सर्वे सुप्रणम्य प्रजेश्वरम् ।
तुष्टुवुः परया भक्त्या तारकेण प्रपीडिताः ।

अथ सर्वस्य धातारं
ते सर्वे सर्वतोमुखम् ।
वागीशं वाग्भिरर्थ्याभिः
प्रणिपत्योपतस्थिरे ।

**ब्रह्मोवाच—**
अहं श्रुत्वामरनुतिं यथार्थां हृदयंगमाम् ।
सुप्रसन्नतरो भूत्वा प्रत्यवोचं दिवौकसः ।

स्वागतं स्वानधीकारा-
न्प्रभावैरवलम्ब्य वः ।
युगपद्युगबाहुभ्यः
प्राप्तेभ्यः प्राज्यविक्रमाः ! ।

स्वागतं स्वाधिकारा वै निर्विघ्नाः संति वः सुराः ।
किमर्थमागता यूयमत्र सर्वे वदन्तु मे ।

एवं यदात्थ भगव-
न्नामृष्टं नः परैः पदम् ।
प्रत्येकं विनियुक्तात्मा
कथं न ज्ञास्यसि प्रभो ! ।

तद्दुःखं नाशय क्षिप्रं वयं ते शरणं गताः ।

अहर्निशं बाधतेऽस्मान्यत्रतत्रास्थितान्स वै ।
भवता किमु न ज्ञातं दुःखं यन्न उपस्थितम् ।

भवल्लब्धवरोदीर्ण-
स्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां
धूमकेतुरिवोत्थितः ।
पुरे तावन्तमेवास्य
तनोति रविरातपम् ।
दीर्घिकाकमलोन्मेषो
यावन्मात्रेण साध्यते ।

**देवा ऊचुः—**
लोकेश ! तारको दैत्यो वरेण तव दर्पितः ।
निरस्यास्मान्हठात्स्थानान्यग्रहीन्नो बलात्स्वयम्
तारकान्नश्च यद्दुःखं संभूतं सकलेश्वर ! ।
तेन सर्वे वयं तात ! पीडिता विकला अति ।
अग्निर्यमोऽथ वरुणो निर्ऋतिर्वायुरेव च ।
अन्ये दिक्पतयश्चापि सर्वे यद्वशगामिनः ।
सर्वे मनुष्यधर्माणः सर्वैः परिकरैर्युताः ।
सेवंते तं महादैत्यं न स्वतंत्राः कदाचन ।

सर्वाभिः सर्वदा चन्द्र-
स्तं कलाभिर्निषेवते ।
नादत्ते केवलां लेखां
हरचूडामणीकृताम् ।

इत्थमाराध्यमानोऽपि
क्लिश्नाति भुवनत्रयम् ।
शाम्येत्प्रत्युपकारेण
नोपकारेण दुर्जनः ।

तेनामरवधूहस्तैः
सदयालूनपल्लवाः ।
अभिज्ञाश्छेदपातानां
क्रियन्ते नन्दनद्रुमाः ।
तस्मिन्नुपायाः सर्वे नः
क्रूरे प्रतिहतक्रियाः ।
वीर्यवन्त्यौषधानीव
विकारे सांनिपातिके ।
जयाशा यत्र चास्माकं
प्रतिघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य
कण्ठे निष्कमिवार्पितम् ।
वचस्यवसिते तस्मि-
न्ससर्ज गिरमात्मभूः ।
गर्जितानन्तरां वृष्टिं
सौभाग्येन जिगाय सा ।

तस्य सेनापतिः क्रौंचो महापाप्यस्ति दानवः ।
स पातालतलं गत्वा बाधतेऽत्यनिशं प्रजाः ।
तेन नस्तारकेणेदं सकलं भुवनत्रयम् ।

हतं हठाज्जगद्धातः ! पापेनाकरुणात्मना ।
वयं सर्वे तारकाख्यवह्नौ दग्धाः सुविह्वलाः ।

तेन क्रूरा उपाया नः सर्वे हतबलाः कृताः ।
यावत्यो वनिताः सर्वा ये चाप्यप्सरसां गणाः ।
सर्वास्तानग्रहीद्दैत्यस्तारकोऽसौ महाबली ।

विकारे सांनिपाते वा वीर्यवंत्यौषधानि च ।
यत्रास्माकं जयाशा हि हरिचक्रे सुदर्शने ।
तत्कुंठितमभूत्तस्य कंठे पुष्पमिवार्पितम् ।

**ब्रह्मोवाच—**

इत्येतद्वचनं श्रुत्वा निर्जराणामहं मुने ! ।
प्रत्यवोचं सुरान्सर्वांस्तत्कालसदृशं वचः ।

इतः स दैत्यः प्राप्तश्री-
र्नेत एवार्हति क्षयम् ।

**ब्रह्मोवाच—**

ममैव वचसा दैत्यस्तारकाख्यः समेधितः ।
न मत्तस्तस्य हननं युज्यते हि दिवौकसः ! ।
ततो नैव वधो योग्यो यतो वृद्धिमुपागतः ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ।

विषवृक्षोऽपि संवर्ध्य
स्वयं छेत्तुमसांप्रतम् ।
परिच्छिन्नप्रभावर्द्धि-
र्न मया न च विष्णुना ।
अंशादृते निषिक्तस्य
नीललोहितरेतसः ।

न मया तारको वध्यो हरिणापि हरेण च ।
नान्येनापि सुरैर्वापि मद्वरात्सत्यमुच्यते ।
शिववीर्यसमुत्पन्नो यदि स्यात्तनयः सुराः ! ।

स हि देवः परं ज्योति-
स्तमःपारे व्यवस्थितम् ।
संयुगे सांयुगीनं त-
मुद्यतं प्रसहेत कः ।
उमारूपेण ते यूयं
संयमस्तिमितं मनः ।
शंभोर्यतध्वमाक्रष्टु-
मयस्कान्तेन लोहवत् ।
उभे एव क्षमे वोढु-
मुभयोर्बीजमाहितम् ।
सा वा शंभोस्तदीया वा
मूर्तिर्जलमयी मम ।

स एव तारकाख्यस्य हंता दैत्यस्य नापरः ।
यमुपायमहं वच्मि तं कुरुध्वं सुरोत्तमाः ! ।
महादेवप्रसादेन सिद्धिमेष्यति स ध्रुवम् ।
सती दाक्षायणी पूर्वं त्यक्तदेहा तु याभवत् ।
सोत्पन्ना मेनकागर्भात्सा कथा विदिता हि वः ।
तस्या अवश्यं गिरिशः करिष्यति करग्रहम् ।
तत्कुरुध्वमुपायं च तथापि त्रिदिवौकसः ! ।
तथा विधध्वं सुतरां तस्यां तु परियत्नतः ।
पार्वत्यां मेनकायां वै रेतःप्रतिनिपातने ।
तमूर्ध्वरेतसं शंभुं सैव प्रच्युतरेतसम् ।
कर्तुं समर्था नान्यास्ति तथा काप्यबला बलात् ।

तस्यात्मा शितिकण्ठस्य
सैनापत्यमुपेत्य वः ।
मोक्ष्यते सुरबन्दीनां
वेणीर्वीर्यविभूतिभिः ।

सा सुता गिरिराजस्य सांप्रतं प्रौढयौवना ।
तपस्यन्तं हिमगिरौ नित्यं संसेवते हरम् ।
तामग्रतोऽर्चमानां वै त्रैलोक्ये वरवर्णिनीम् ।
ध्यानसक्तो महेशो हि मनसापि न हीयते ।
भार्यां समीहेत यथा स कालीं चंद्रशेखरः ।
तथा विदध्वं त्रिदशा ! न चिरादेव यत्नतः ।

| | |
|---|---|
| इति व्याहृत्य विबुधा-<br>न्विश्वयोनिस्तिरोदधे ।<br>मनस्याहितकर्तव्या-<br>स्तेऽपि देवा दिवं ययुः । | स्थानं गत्वाथ दैत्यस्य तमहं तारकं ततः ।<br>निवारयिष्ये कुहठात्स्वस्थानं गच्छतामराः ! ।<br>इत्युक्त्वाहं च संबोध्यासुरं तं सकलेश्वरः ।<br>स्मृत्वा शिवं च सशिवं तत्रांतर्धानमागतः । |
| तत्र निश्चित्य कंदर्पम-<br>गमत्पाकशासनः ।<br>मनसा कार्यसंसिद्धौ<br>त्वराद्विगुणरंहसा ॥ | गतेषु तेषु देवेषु शक्रः सस्मार वै स्मरम् । |
| अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं<br>रतिवलयपदाङ्के चापमासज्य कण्ठे ।<br>सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः<br>शतमखमुपतस्थे<br>प्राञ्जलिः पुष्पधन्वा । | आगतस्तत्क्षणात्कामः सवसंतो रतिप्रियः ।<br>सावलेपो युतो रत्या त्रैलोक्यविजयी प्रभुः ।<br>प्रणामं च ततः कृत्वा स्थित्वा तत्पुरतः स्मरः ।<br>महोन्नतमनास्तात ! सांजलिः शक्रमब्रवीत् । |
| आज्ञापय ज्ञातविशेष पुंसां<br>लोकेषु यत्ते करणीयमस्ति ।<br>अनुग्रहं संस्मरणप्रवृत्त-<br>मिच्छामि संवर्धितमाज्ञया ते । | **काम उवाच—**<br>किं कार्यं ते समुत्पन्नं स्मृतोऽहं केन हेतुना ?<br>तत्त्वं कथय देवेश ! तत्कर्तुं समुपागतः । |
| केनास्यसूया पदकाङ्क्षिणा ते<br>नितान्तदीर्घैर्जनिता तपोभिः ।<br>यावद्भवत्याहितसायकस्य<br>मत्कार्मुकस्यास्य निदेशवर्ती । | पदं ते कर्षितुं यो वै तपस्तपति दारुणम् ।<br>पातयिष्यामहं तं च शत्रुं ते मित्र ! सर्वथा ।<br>क्षणेन भ्रंशयिष्यामि कटाक्षेण वरस्त्रियाः ।<br>देवर्षिदानवादींश्च नराणां गणना न मे ।<br>वज्रं तिष्ठतु दूरे वै शस्त्राण्यन्यान्यनेकशः ।<br>पंचैव मृदवो बाणास्ते च पुष्पमया मम ।<br>चापस्त्रिधा पुष्पमयः शिंजिनी भ्रमरार्जिता । |
| तव प्रसादात्कुसुमायुधोऽपि<br>सहायमेकं मधुमेव लब्ध्वा । | बलं सुदयिता मे हि वसंतः सचिवः स्मृतः ।<br>अहं पंचबलो देवो मित्रं मम सुधानिधिः । |

कुर्यां हरस्यापि पिनाकपाणे-
र्धैर्यच्युतिं के मम धन्विनोऽन्ये ।

अथोरुदेशादवतार्य पादमा-
क्रान्तिसंभावितपादपीठम् ।
संकल्पितार्थे विवृतात्मशक्ति-
माखण्डलः काममिदं बभाषे ।

सर्वं सखे ! त्वय्युपपन्नमेत-
दुभे ममास्त्रे कुलिशं भवांश्च ।
वज्रं तपोवीर्यमहत्सु कुण्ठं
त्वं सर्वतोगामि च साधकं च ।

अवैमि ते सारमतः खलु त्वां
कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य
कृष्णेन देहोद्वहनाय शेषः ।
तस्मै हिमाद्रेः प्रयतां तनूजां
यतात्मने रोचयितुं यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिः
सैव क्षमेत्यात्मभुवोपदिष्टम् ।

अमी हि वीर्यप्रभवं भवस्य
जयाय सेनान्यमुशन्ति देवाः ।
स च त्वदेकेषुनिपातसाध्यो
ब्रह्माङ्गभूर्ब्रह्माणि योजितात्मा ।

किं ते कार्यं करिष्यंति मयि मित्र ! उपस्थिते ।
ब्रह्माणं वा हरिं वापि भ्रष्टं कुर्यां न संशयः ।

अन्येषां गणना नास्ति पातयेयं हरं त्वपि ।
इत्येवं तु वचस्तस्य श्रुत्वा शक्रः सुहर्षितः ।
उवाच प्रणमन्वाचा कामं कांतासुखावहम् ।

**शक्र उवाच—**

मित्राणि मम संत्येवं बहूनि सुमहांति च ।
परं तु स्मर ! सन्मित्रं त्वत्तुल्यं न हि कुत्रचित् ।
जयार्थं मे द्वयं तात ! निर्मितं वज्रमुत्तमम् ।
वज्रं च निष्फलं स्याद्वै त्वं तु नैव कदाचन ।
केनापि नैव तच्छक्यं दूरीकर्तुं त्वया विना ।
दातुः परीक्षा दुर्भिक्षे रणे शूरस्य जायते ।
आपत्काले तु मित्रस्याशक्तौ स्त्रीणां कुलस्य हि ।
यत्कार्यं मनसोद्दिष्टं मया तात मनोभव ! ।
कर्तुं तत्त्वं समर्थोऽसि नान्यस्मात्तस्य संभवः ।
तारकाख्यो महादैत्यो ब्रह्मणो वरमद्भुतम् ।
अभूदजेयःसंप्राप्य सर्वेषामपि दुःखदः ।

एतस्य मरणं प्रोक्तं प्रजेशेन दुरात्मनः ।
शम्भोर्वीर्योद्भवाद्बालान्महायोगीश्वरस्य हि ।
एतत्कार्यं त्वया साधु कर्तव्यं सुप्रयत्नतः ।
शंभुः स गिरिराजे हि तपः परममास्थितः ।

गुरोर्नियोगाच्च नगेन्द्रकन्या
स्थाणुं तपस्यन्तमधित्यकायाम् ।
अन्वास्त इत्यप्सरसां मुखेभ्यः
श्रुतं मया मत्प्रणिधिः स वर्गः ।
तस्मिन्सुराणां विजयाभ्युपाये
तवैव नामास्त्रगतिः कृती त्वम् ।
अप्यप्रसिद्धं यशसे हि पुंसा-
मनन्यसाधारणमेव कर्म ।
सुराः समभ्यर्थयितार एते
कार्यं त्रयाणामपि विष्टपानाम् ।
चापेन ते कर्म न चातिहिंस्र-
महो ! बतासि स्पृहणीयवीर्यः।
स माधवेनाभिमतेन सख्या
रत्या च साशङ्कमनुप्रयातः ।
अङ्गव्ययप्रार्थितकार्यसिद्धिः
स्थाण्वाश्रमं हैमवतं जगाम ।
असूत सद्यः कुसुमान्यशोकः
स्कन्धात्प्रभृत्येव सपल्लवानि ।

पादेन नापैक्षत सुन्दरीणां
संपर्कमासिञ्जितनूपुरेण ।
वर्णप्रकर्षे सति कर्णिकारं
दुनोति निर्गन्धतया स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ।

तत्समीपे च देवार्थं पार्वती स्वसखीयुता ।
सेवमाना तिष्ठतीति पित्राज्ञप्ता मया श्रुतम् ।
यथा तस्यां रुचिस्तस्य शिवस्य नियतात्मनः ।
जायते नितरां मार ! तथा कार्यं त्वया ध्रुवम् ।
लोके स्थायी प्रतापस्ते भविष्यति न चान्यथा ।
इति कृत्वा कृती स्यास्त्वं सर्वं दुःखं विनंक्ष्यति ।
अग्रहीत्तरसा कामः शिवमायाविमोहितः ।
यत्र योगीश्वरः साक्षात्तप्यते परमं तपः ।
जगाम तत्र सुप्रीतः सदारः सवसंतकः ।

वसंतः स च यो धर्मः प्रससार स सर्वतः ।
तपःस्थाने महेशस्योषधिप्रस्थे मुनीश्वर ! ।
वनानि च प्रफुल्लानि पादपानां महामुने ! ।
पुष्पाणि सहकाराणामशोकवनिकासु वै ।
विरेजुः सुस्मरोद्दीपकराणि सुरभीण्यपि ।

तस्मिन्वने संयमिनां मुनीनां
तपःसमाधेः प्रतिकूलवर्ती ।
संकल्पयोनेरभिमानभूत-
मात्मानमाधाय मधुर्जजृम्भे ।
लग्नद्विरेफाञ्जनभक्तिचित्रं
मुखे मधुश्रीस्तिलकं प्रकाश्य ।
रागेण बालारुणकोमलेन
चूतप्रवालोष्ठमलंचकार ।
मधु द्विरेफः कुसुमैकपात्रे
पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं
मृगीमकण्डूयत कृष्णसारः ।
श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ।
कामस्तु बाणावसरं प्रतीक्ष्य
पतङ्गवद्वह्निमुखं विविक्षुः ।
उमासमक्षं हरबद्धलक्ष्यः
शरासनज्यां मुहुराममर्श ।
दृष्टिप्रपातं परिहृत्य तस्य
कामः पुरःशुक्रमिव प्रयाणे ।
प्रान्तेषु संसक्तनमेरुशाखं
ध्यानास्पदं भूतपतेर्विवेश ।
सदेवदारुद्रुमवेदिकायां
शार्दूलचर्मव्यवधानवत्याम् ।

तत्र गत्वा स्मरो गर्वी शिवमायाविमोहितः ।
एवं वसंतविस्तारो मदनावेशकारकः ।
वनौकसां तदा तत्र मुनीनां दुःसहोऽप्यभूत् ।
कैरवाणि च पुष्पाणि भ्रमराकलितानि च ।
बभूवुर्मदनावेशकराणि च विशेषतः ।

यदा चाप्राप्तविवरस्तस्मिन्योगिवरे स्मरः ।
महादेवस्तदा सोऽभून्महाभयविमोहितः ।
एतस्मिन्नन्तरे तत्र सखीभ्यां संयुता शिवा ।
जगाम शिवपूजार्थं नीत्वा पुष्पाण्यनेकशः ।
यदा शिवसमीपे तु गता सा पर्वतात्मजा ।
तदैव शंकरो ध्यानं त्यक्त्वा क्षणमवस्थितः ।
तच्छिद्रं प्राप्य मदनः प्रथमं हर्षणेन तु ।
बाणेन हर्षयामास पार्श्वस्थं चन्द्रशेखरम् ।
शृङ्गारैश्च तदा भावैः सहिता पार्वती हरम् ।
जगाम कामसाहाय्ये मुने ! सुरभिणा सह ।

आसीनमासन्नशरीरपात-
स्त्रियम्बकं संयमिनं ददर्श ।
भविष्यतः पत्युरुमा च शंभोः
समाससाद प्रतिहारभूमिम् ।
योगात्स चान्तः परमात्मसंज्ञं
दृष्ट्वा परं ज्योतिरुपारराम ।
विवृण्वती शैलसुतापि भाव-
मङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ
मुखेन पर्यस्तविलोचनेन ।
मध्येन सा वेदिविलग्नमध्या
वलित्रयं चारु बभार बाला ।
आरोहणार्थं नवयौवनेन
कामस्य सोपानमिव प्रयुक्तम् ।
अन्योन्यमुत्पीडयदुत्पलाक्ष्याः
स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।
मध्ये यथा श्याममुखस्य तस्य
मृणालसूत्रान्तरमप्यलभ्यम् ।
प्रतिग्रहीतुं प्रणयिप्रियत्वा-
त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा
धनुष्यमोघं समधत्त बाणम् ।
हरस्तु किंचित्परिलुप्तधैर्य-
श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ।
अथेन्द्रियक्षोभमयुग्मनेत्रः
पुनर्वशित्वाद्बलवन्निगृह्य ।

सुसंस्मृत्य वरं तस्यां विधिदत्तं पुरा प्रभुः ।
शिवोऽपि वर्णयामास तदंगानि मुदा मुने ! ।
स्त्रीस्वभावाच्च सा तत्र लज्जिता दूरतो गता ।
विवृण्वती निजांगानि पश्यंती च मुहुर्मुहुः ।
सुवीक्षणैर्महामोदात्सुस्मिताभूच्छिवा मुने ! ।
एवं चेष्टा तदा दृष्ट्वा शम्भुर्मोहमुपागतः ।
तदैवाकृष्य तच्चापं रुच्यर्थं शूलधारिणः ।
द्रुतं पुष्पशरं तस्मै स्मरोऽमुञ्चत्सुसंयतः ।
तन्नमस्कृत्य तत्पूजां कृत्वा तत्पुरतः स्थिता ।
सा दृष्ट्वा पार्वती तत्र प्रभुणा गिरिशेन हि ।
विवृण्वती तदांगानि स्त्रीस्वभावात्सुलज्जया ।

उवाच वचनं चैवं महालीलो महेश्वरः ।
अस्या दर्शनमात्रेण महानंदो भवत्यलम् ।
यदालिंगनमेतस्याः कुर्यां किन्तु ततः सुखम् ।
क्षणमात्रं विचार्येत्थं संपूज्य गिरिजां ततः ।
प्रबुद्धः स महायोगी सुविरक्तो जगाविति ।

**शिव उवाच—**

किमु विघ्नाः समुत्पन्नाः कुर्वतस्तप उत्तमम् ।
केन मे विकृतं चित्तं कृतमत्र कुकर्मिणा ।

| | |
|---|---|
| हेतुं स्वचेतोविकृतेर्दिदृक्षु-<br>र्दिशामुपान्तेषु ससर्ज दृष्टिम् । | विचिंत्येत्थं महायोगी परमेशः सतां गतिः ।<br>दिशो विलोकयामास परितः शंकितस्तदा । |
| स दक्षिणापाङ्गनिविष्टमुष्टिं<br>नतांसमाकुञ्चितसव्यपादम् । | वामभागे स्थितं कामं ददर्शाकृष्टबाणकम् ।<br>स्वशरं क्षेप्तुकामं हि गर्वितं मूढचेतसम् । |
| ददर्श चक्रीकृतचारुचापं<br>प्रहर्तुमभ्युद्यतमात्मयोनिम् । | तं दृष्ट्वा तादृशं कामं गिरिशस्य परात्मनः ।<br>संजातः क्रोधसंमर्दस्तत्क्षणादपि नारद ! । |
| तपःपरामर्शविवृद्धमन्यो-<br>र्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य । | चकम्पे च पुरः स्थित्वा दृष्ट्वा मृत्युञ्जयं प्रभुम् ।<br>स्तुतिं कुर्वत्सु देवेषु क्रुद्धस्याति हरस्य हि । |
| स्फुरन्नुदर्चिः सहसा तृतीया-<br>दक्ष्णः कृशानुः किल निष्पपात । | तृतीयात्तस्य नेत्राद्वै निःससार ततो महान् ।<br>ललाटमध्यगात्तस्मात् स वह्निर्द्रुतम्भवः । |
| क्रोधं प्रभो ! संहर संहरेति<br>यावद्गिरः खे मरुतां चरन्ति । | जज्वालोर्ध्वशिखो दीप्तः प्रलयाग्निसमप्रभः ।<br>भस्मसात्कृतवान्साधो ! मदनं तावदेव हि । |
| तावत्स वह्निर्भवनेत्रजन्मा<br>भस्मावशेषं मदनं चकार । | यावच्च मरुतां वाचः क्षम्यतां क्षम्यतामिति । |
| तीव्राभिषङ्गप्रभवेण वृत्तिं<br>मोहेन संस्तम्भयतेन्द्रियाणाम् । | श्वेतांगा विकृतात्मा च गिरिराजसुता तदा ।<br>जगाम मन्दिरं स्वं च समादाय सखीजनम् । |
| अज्ञातभर्तृव्यसना मुहूर्तं<br>कृतोपकारेव रतिर्बभूव । | क्षणमात्रं रतिस्तत्र विसंज्ञा साभवत्तदा ।<br>भर्तृमृत्युजदुःखेन पतिता सा मृता इव । |
| शैलात्मजापि पितु-<br>रुच्छिरसोऽभिलाषं<br>व्यर्थं समर्थ्य ललितं वपुरात्मनश्च । | जातायां चैव संज्ञायां रतिरत्यंतविह्वला ।<br>विललाप तदा तत्रोच्चरन्ती विविधं वचः । |
| सख्योः समक्षमिति<br>चाधिकजातलज्जा<br>शून्या जगाम भवना-<br>भिमुखीकथंचित् । | रतिरुवाच—<br>किं करोमि क्व गच्छामि किं कृतं दैवतैरिह । |
| अथ मोहपरायणा सती<br>विवशा कामवधूर्विबोधिता । | मत्स्वामिनं समाहूय नाशयामासुरुद्धतम् ।<br>हा हा नाथ स्मर स्वामिन्प्राणप्रिय सुखप्रद ! । |
| विधिना प्रतिपादयिष्यता<br>नववैधव्यमसह्यवेदनम् । | इदं तु किमभूदत्र हा हा प्रिय ! प्रियेति च ।<br>इत्थं विलपती सा तु वदंती बहुधा वचः । |

अयि जीवितनाथ ! जीवसी-
त्यभिधायोत्थितया तया पुरः ।
ददृशे पुरुषाकृति क्षितौ
हरकोपानलभस्म केवलम् ।
अथ सा पुनरेव विह्वला
वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा
समदुःखामिव कुर्वती स्थलीम् ।
इत्थं रतेः किमपि भूतमदृश्यरूपं
मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेना-
माश्वासयन्सुचरितार्थपदैर्वचोभिः ।
अथ मदनवधूरुपप्लवान्तं
व्यसनकृशा परिपालयांबभूव ।

शशिन इव दिवातनस्य लेखा
किरणपरिक्षयधूसरा प्रदोषम् ।
तथा समक्षं दहता मनोभवं
पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती
प्रियेषु सौभाग्यफला हि चारुता ।
इयेष सा कर्तुमवन्ध्यरूपता
समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं
तथाविधं प्रेम पतिश्च तादृशः ।

हस्तौ पादौ तदास्फाल्य केशानत्रोटयत्तदा ।

एतस्मिन्नंतरे तत्र देवाः शक्रादयोऽखिलाः ।
रतिमूचुः समाश्वास्य संस्मरन्तो महेश्वरम् ।

**देवा ऊचुः—**

किंचिद्भस्म गृहीत्वा तु रक्ष यत्नाद्भयं त्यज ।
जीवयिष्यति स स्वामी लप्स्यसे त्वं पुनः प्रियम् ।
अन्तर्हिते स्मरं दग्ध्वा हरे तद्विरहाच्छिवा ।
विकलाभूद् भृशं सा वै लेभे शर्म न कुत्रचित् ।

**ब्रह्मोवाच—**

त्वयि देवमुने ! याते पार्वती हृष्टमानसा ।
तपःसाध्यं हरं मेने तपोर्थं मन आदधे ।
निनिंद च स्वरूपं सा हा हतास्मीत्यथाब्रवीत् ।
सखीभिर्बोधिता चापि न बुबोध गिरींद्रजा ।
तिष्ठंति च सखीमध्ये न किंचित्सुखमाप ह ।
धिक्स्वरूपं मदीयं च तथा जन्म च कर्म च ।
इति ब्रुवंती सततं स्मरंती हरचेष्टितम् ।
सुखं न लेभे किंचिद्वाऽब्रवीच्छिव शिवेति च ।

**पार्वत्युवाच—**

मातस्तत्तं गमिष्यामि प्रातः प्राप्तुं महेश्वरम् ।
अनुजानीहि मां गन्तुं तपसेऽद्य तपोवनम् ।

निशम्य चैनां तपसे कृतोद्यमां
सुता गिरीशप्रतिसक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा
निवारयन्ती महतो मुनिव्रतात् ।
मनीषिताः सन्ति गृहेषु देवता-
स्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः ।
इति ध्रुवेच्छामनुशासती सुतां
शशाक मेना न नियन्तुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ।
अथानुरूपाभिनिवेशतोषिणा
कृताभ्यनुज्ञा गुरुणा गरीयसा ।
प्रजासु पश्चात्प्रथितं तदाख्यया
जगाम गौरीशिखरं शिखण्डिमत् ।
प्रजासु पश्चात्प्रथितं तदाख्यया
जगाम गौरीशिखरं शिखण्डिमत् ।
विमुच्य सा हारमहार्यनिश्चया
विलोलयष्टिप्रविलुप्तचन्दनम् ।
बबन्ध बालारुणबभ्रु वल्कलं
पयोधरोत्सेधविशीर्णसंहति ।
यदा फलं पूर्वतपःसमाधिना
न तावता लभ्यममंस्त काङ्क्षितम् ।

**ब्रह्मोवाच—**

इत्याकर्ण्य वचः पुत्र्या मेना दुःखमुपागता ।
सोपाहूय तदा पुत्रीमुवाच विकला सती ।

**मेनोवाच—**

दुःखितासि शिवे पुत्रि ! तपस्तप्तुं पुरा यदि ।
तपश्चर गृहेऽद्य त्वं न बहिर्गच्छ पार्वति ! ।
कुत्र यासि तपः कर्तुं देवाः संति गृहे मम ।
तीर्थानि च समस्तानि क्षेत्राणि विविधानि च ।
शरीरं कोमलं वत्से ! तपस्तु कठिनं महत् ।
एतस्मात्तु त्वया कार्यं तपोऽत्र न बहिर्व्रज ।
स्त्रीणां तपोवनगतिर्न श्रुता कामनार्थिनी ।
तस्मात्त्वं पुत्रि ! मा कार्षीस्तपोर्थं गमनं प्रति ।
इत्येवं बहुधा पुत्री तन्मात्रा विनिवारिता ।
संवेदे न सुखं किंचिद्विनाराध्य महेश्वरम् ।
मातुराज्ञां च संप्राप्य सुव्रता मुनिसत्तम ! ।
ततः स्वांते सुखं लेभे पार्वती स्मृतशंकरा ।
मातरं पितरं साथ प्रणिपत्य मुदा शिवा ।
सखीभ्यां च शिवं स्मृत्वा तपस्तप्तुं समुद्यता ।
हित्वा मतान्यनेकानि वस्त्राणि विविधानि च ।
वल्कलानि धृतान्याशु मौञ्जीं बद्ध्वा तु शोभनाम् ।
हित्वा हारं तथा चर्म मृगस्य परं धृतम् ।
जगाम तपसे तत्र गङ्गावतरणं प्रति ।
शम्भुना कुर्वता ध्यानं यत्र दग्धो मनोभवः ।
गङ्गावतरणो नाम प्रस्थो हिमवतः स च ।
वातश्चैव तथा शीतवृष्टिश्च विविधा तथा ।
दुःसहोऽपि तथा धर्मस्तया सेहे सुचित्तया ।

तदानपेक्ष्य स्वशरीरमार्दवं
तपो महत्सा चरितुं प्रचक्रमे ।
शुचौ चतुर्णां ज्वलतां हविर्भुजां
शुचिस्मिता मध्यगता सुमध्यमा ।
विजित्य नेत्रप्रतिघातिनीं प्रभा-
मनन्यदृष्टिः सवितारमैक्षत ।
तथातितप्तं सवितुर्गभस्तिभि-
र्मुखं तदीयं कमलश्रियं दधौ ।
अपाङ्गयोः केवलमस्य दीर्घयोः
शनैःशनैः श्यामिकया कृतं पदम् ।
अयाचितोपस्थितमम्बु केवलं
रसात्मकस्योडुपतेश्च रश्मयः ।
बभूव तस्याः किल पारणाविधिर्न
वृक्षवृत्तिव्यतिरिक्तसाधनः ।
निनाय सात्यन्तहिमोत्किरानिलाः
सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रन्दिनि चक्रवाकयोः
पुरो वियुक्ते मिथुने कृपावती ।
स्वयंविशीर्णद्रुमपर्णवृत्तिता
परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः प्रियंवदां
वदन्त्यपर्णेति च तां पुराविदः ।
मृणालिकापेलवमेवमादिभि-
र्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम् ।
तपः शरीरैः कठिनैरुपार्जितं
तपस्विनां दूरमधश्चकार सा ।

अथाजिनाषाढधरः प्रगल्भवा-
ग्ज्वलन्निव ब्रह्ममयेन तेजसा ।

दुःखं च विविधं तत्र गणितं न तथा गतम् ।
केवलं मन आधाय शिवे सासीत्स्थिता मुने !
ततः पर्णान्यपि शिवा निरस्य हिमवत्सुता ।
निराहाराऽभवद्देवी तपश्चरणसंरता ।

अधोमुखी निर्विकारा जटावल्कलधारिणी ।
तथा तया तपस्तप्तं मुनीनामपि दुष्करम् ।

आहारे त्यक्तपर्णाऽभूद्यस्माद्धिमवतः सुता ।
तेन देवैरपर्णेति कथिता नामतः शिवा ।
स्मृत्वा च पुरुषास्तत्र परमं विस्मयं गताः ।
तत्तपोदर्शनार्थं हि समाजग्मुश्च तेऽखिलाः ।
धन्यान्निजान्मन्यमाना जगदुश्चेति सम्मतः ।
शृणु शैलसुते देवि ! किमर्थं तप्यते तपः ?
इच्छसि त्वं सुरं कं च किं फलं तद्वदाधुना ।
**ब्रह्मोवाच—**
गतेषु तेषु मुनिषु स्वं लोकं शङ्करः स्वयम् ।
परीक्षितुं तपो देव्या ऐच्छत्सूतिकरः प्रभुः ।

विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ।

तमातिथेयी बहुमानपूर्वया
सपर्यया प्रत्युदियाय पार्वती ।
भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्विशेषेष्वतिगौरवाः क्रियाः ।
विधिप्रयुक्तां परिगृह्य सत्क्रियां
परिश्रमं नाम विनीय च क्षणम् ।
उमां स पश्यन्नृजुनैव चक्षुषा
प्रचक्रमे वक्तुमनुज्झितक्रमः ।
अपि क्रियार्थं सुलभं समित्कुशं
जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्तसे
शरीरमाद्यं खलु धर्मसाधनम् ।
कुले प्रसूतिः प्रथमस्य वेधस-
स्त्रिलोकसौन्दर्यमिवोदितं वपुः ।
अमृग्यमैश्वर्यसुखं नवं वय-
स्तपःफलं स्यात्किमतः परं वद ।
किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते ।
इति प्रविश्याभिहिता द्विजन्मना
मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं
विवर्तितानञ्जननेत्रमैक्षत ।

परीक्षान्च्छद्मना शम्भुर्द्रष्टुं तां तुष्टमानसः ।
जाटिलं रूपमास्थाय स ययौ पार्वतीवनम् ।
आगतं तं तदा दृष्ट्वा ब्राह्मणं तेजसाद्भुतम् ।
अपूजयच्छिवा देवी सर्वपूजोपहारकैः ।
सुसत्कृतं संविधाभिः पूजितं परया मुदा ।
पार्वती कुशलं प्रीत्या पप्रच्छ द्विजमादरात् ।

**पार्वत्युवाच—**

ब्रह्मचारिस्वरूपेण कस्त्वं हि कुत आगतः ?
इदं वनं भासयसे वद वेदविदां वर ! ।
अहमिच्छाभिगामी च वृद्धो विप्रतनुः सुधीः ।
तपस्वी सुखदोऽन्येषामुपकारी न संशयः ।
का त्वं कस्यासि तनया किमर्थं विजने वने ?
तपश्चरसि दुर्धर्षं मुनिभिः प्रपदैरपि ।
न बाला न च वृद्धासि तरुणी भासि शोभना ।
किं त्वं वेदप्रसूर्लक्ष्मीः किं सुरूपा सरस्वती ?
एतासु मध्ये का वा त्वं नाहं तर्कितुमुत्सहे ।

**पार्वत्युवाच—**

नाहं वेदप्रसूर्विप्र ! न लक्ष्मीश्च सरस्वती ।
अहं हिमाचलसुता सांप्रतं नाम पार्वती ।

**जटिल उवाच—**

किमिच्छसि वरं देवि ! प्रष्टुमिच्छाम्यतः परम् ।
त्वय्येव तदसौ देवि ! फलं सर्वं प्रदृश्यते ।
परार्थे च तपश्चेद्वै तिष्ठेत्तु तप एव तत् ।
रत्नं हस्ते समादाय हित्वा काचस्तु संचितः ।
ईदृशं तव सौन्दर्यं कथं व्यर्थीकृतं त्वया ?
हित्वा वस्त्राण्यनेकानि चर्मादि च धृतं त्वया ।
तत्सर्वं कारणं ब्रूहि तपसस्त्वस्य सत्यतः ।
तच्छ्रुत्वा विप्रवर्योऽहं यथा हर्षमवाप्नुयाम् ।

ब्रह्मोवाच—

इति पृष्टा तदा तेन सखीं प्रैरयताम्बिका ।
तन्मुखेनैव तत्सर्वं कथयामास सुव्रता ।
तया च प्रेरिता तत्र पार्वत्या विजयाभिधा ।
प्राणप्रिया सुव्रतज्ञा सखी जटिलमब्रवीत् ।

सख्युवाच—

श्रृणु साधो ! प्रवक्ष्यामि पार्वतीचरितं परम् ।
हेतुं च तपसः सर्वं यदि त्वं श्रोतुमिच्छसि ।
सखी मे गिरिराजस्य सुतेयं हिमभूभृतः ।
ख्याता वै पार्वतीनाम्ना सा कालीति च मेनया ।
ऊढेयं न च केनापि न वांछति शिवात्परम् ।
हित्वेन्द्रप्रमुखान्देवान् हरिं ब्रह्माणमेव च ।
पतिं पिनाकपाणिं वै प्राप्तुमिच्छति पार्वती ।
मत्सखी चादराद्देशात्तपस्तपति दारुणम् ।
मनोरथं कुतस्तस्या न फलिष्यति तापस ! ।
यत्ते पृष्टं द्विजश्रेष्ठ ! मत्सख्या मनसीप्सितम् ।
मयाख्यातं च तत्प्रीत्या किमन्यच्छ्रोतुमिच्छसि ?

जटिल उवाच—

सख्येदं कथितं तत्र परिहासोऽनुमीयते ।
यथार्थं चेत्तदा देवी स्वमुखेनाभिभाषताम् ।

ब्रह्मोवाच—

इत्युक्ते च तदा तेन जटिलेन द्विजन्मना ।
उवाच पार्वती देवी स्वमुखेनैव तं द्विजम् ।

पार्वत्युवाच—

श्रृणु द्विजेन्द्र जटिल ! मद्वृत्तं निखिलं खलु ।
सख्युक्तं मेऽद्य यत्सत्यं तत्तथैव न चान्यथा ।
मनसा वचसा साक्षात्कर्मणा यतिभावतः ।
सत्यं ब्रवीमि नोऽसत्यं वृतो वै शङ्करो मया ।

सखी तदीया तमुवाच वर्णिनं
निबोध साधो ! तव चेत्कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं
कृतं तपःसाधनमेतया वपुः ।
इयं महेन्द्रप्रभृतीनधिश्रिय-
श्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहा-
त्पिनाकपाणिं पतिमाप्तुमिच्छति ।
यथा श्रुतं वेदविदांवर ! त्वया
जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं
मनोरथानामगतिर्न विद्यते ।
अथाह वर्णी विदितो महेश्वर-
स्तदर्थिनी त्वं पुनरेव वर्तसे ।

अमङ्गलाभ्यासरतिं विचिन्त्य तं
तवानुवृत्तिं न च कर्तुमुत्सहे ।
चतुष्कपुष्पप्रकरावकीर्णयोः
परोऽपि को नाम तवानुमन्यते ।
अलक्तकाङ्कानि पदानि पादयो-
र्विकीर्णकेशासु परेतभूमिषु ।
अयुक्तरूपं किमतः परं वद
त्रिनेत्रवक्षः सुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे
पदं चिताभस्मरजः करिष्यति ।
इयं च तेऽन्या पुरतो बिडम्बना
यदूढया वारणराजहार्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ।
वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ।
अवस्तुनिर्बन्धपरे ! कथं नु ते
करोऽयमामुक्तविवाहकौतुकः ।
करेण शंभोर्वलयीकृताहिना
सहिष्यते तत्प्रथमावलम्बनम् ।
त्वमेव तावत्परिचिन्तय स्वयं
कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंसलक्षणं
गजाजिनं शोणितबिन्दुवर्षि च ।

जानामि दुर्लभं वस्तु कथं प्राप्यं मया भवेत् ।
तथापि मनऔत्सुक्यात्तप्यतेऽद्य तपो मया ।

**ब्राह्मण उवाच—**

एतावत्कालपर्यन्तं ममेच्छा महती ह्यभूत् ।
किं वस्तु कांक्षती देवी कुरुते सुमहत्तपः ।
तज्ज्ञात्वा निखिलं देवि श्रुत्वा त्वन्मुखपङ्कजा ।
इतो गच्छाम्यहं स्थानाद्यथेच्छसि तथा कुरु ।
इत्युक्त्वा वचनं तस्य यावद्गन्तुमियेष सः ।
तावच्च पार्वती देवी प्रणम्योवाच तं द्विजम् ।

**पार्वत्युवाच—**

किं गमिष्यसि विप्रेन्द्र ! स्थितो भव हितं वद ।

**द्विजोवाच—**

यदि श्रोतुमना देवि ! मां स्थापयसि भक्तितः ।
वदामि तत्त्वं सत्सर्वं येन ते वयुनं भवेत् ।
जानाम्यहं महादेवं सर्वथा गुरुधर्मतः ।
वृषध्वजो महादेवो भस्मदिग्धो जटाधरः ।
व्याघ्रचर्मांबरधरः संवीतो गजकृत्तिना ।
कपालधारी सर्पौघैः सर्वगात्रेषु वेष्टितः ।
विषदिग्धोऽभक्ष्यभक्षो विरूपाक्षो बिभीषणः ।
अव्यक्तजन्मा सततं गृहभोगविवर्जितः ।
दिगम्बरो दशभुजो भूतप्रेतान्वितः सदा ।
क्व त्वं कमलपत्राक्षी क्वासौ वै त्रिलोचनः ।
शशांकवदना त्वं च पञ्चवक्त्रः शिवः स्मृतः ।
चंदनं च त्वदीयांगे चिताभस्म शिवस्य च ।
क्व दुकूलं त्वदीयं वै शांकरं क्व गजाजिनम् ।
क्व भूषणानि दिव्यानि क्व सर्पाः शङ्करस्य च ।
भवत्याश्च शिवस्यैव न युक्तं रूपमुत्तमम् ।
यदि द्रव्यं भवेत्तस्य कथं स्यात्स दिगम्बरः ।
वाहनं च बलीवर्दः सामग्री कापि तस्य न ।
सहायाश्च पिशाचा हि विषं कंठे हि दृश्यते ।

निवर्तयास्मादसदीप्सितान्मनः
क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी
श्मशानशूलस्य न यूपसत्क्रिया ।

इति द्विजातौ प्रतिकूलवादिनि
प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चितभ्रूलतमाहिते तया
विलोचने तिर्यगुपान्तलोहिते ।
अकिंचनः सन्प्रभवः स संपदां
त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्यते
न सन्ति याथार्थ्यविदः पिनाकिनः ।
विभूषणोद्भासि पिनद्धभोगि वा
गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथ वेन्दुशेखरं
न विश्वमूर्तेरवधार्यते वपुः ।

एकाकी च सदा नित्यं विरागी च विशेषतः ।
क्व च हारस्त्वदीयो वै क्व च तन्मुण्डमालिका ।
अङ्गरागः क्व ते दिव्यः चिताभस्म क्व तत्तनौ ।
असद्वस्तु च यत्किंचित् तत्सर्वं स्वयमीहसे ।
निवर्तय मनस्तस्मान्नो चेदिच्छसि तत्कुरु ।

**ब्रह्मोवाच—**

इत्येवं वचनं श्रुत्वा तस्य विप्रस्य पार्वती ।
उवाच क्रुद्धमनसा शिवनिन्दापरं द्विजम् ।
त्वयोक्तं विदितं देव ! तदलीकं न चान्यथा ।
यदि त्वयोदितं स्याद्वै विरुद्धं नोच्यते त्वया ।
कदाचिद्दृश्यते तादृग् वेषधारी महेश्वरः ।
स्वलीलया परब्रह्म स्वरागोपात्तविग्रहः ।
ब्रह्मचारिस्वरूपेण प्रतारयितुमुद्यतः ।
आगतश्छलसंयुक्तं वचोऽवादीः कुयुक्तितः ।
शंकरस्य स्वरूपं तु जानामि सुविशेषतः ।
स्तुतो हि निर्गुणो ब्रह्म सगुणः कारणेन सः ।
कुतो जातिर्भवेत्तस्य निर्गुणस्य गुणात्मनः ।
स सर्वासां हि विद्यानामधिष्ठानं सदाशिवः ।
किं तस्य विद्यया कार्यं पूर्णस्य परमात्मनः ।
कल्याणरूपिणस्तस्य सेवयेह न किं भवेत् ।
किं न्यूनं तस्य देवस्य मामिच्छति सदाशिवः ।
सततजन्मदरिद्रः स्यात्सेवेद्यो यदि शङ्करम् ।
तस्यैतत्सेवनाल्लोके लक्ष्मी स्यादनपायिनी ।
यदग्रे सिद्धयोऽष्टौ च नित्यं नृत्यंति तोषितम् ।
यद्यपूतम्भवेद्भस्म चितायाश्च त्वयोदितम् ।
नित्यभस्मांगगं देवैः शिरोभिर्धार्यते कथम् ? ।
यो देवो जगतां कर्ता भर्ता हर्ता गुणान्वितः ।
निर्गुणः शिवसंज्ञश्च स विज्ञेयः कथं भवेत् ।
अगुणं ब्रह्मणो रूपं शिवस्य परमात्मनः ।

| | |
|---|---|
| | तत्कथं हि विजानन्ति त्वादृशास्तद्बहिर्मुखाः । |
| | यथा तथा भवेद्रुद्रो यथा वा बहुरूपवान् । |
| | ममाभीष्टतमो नित्यं निर्विकारी सतां प्रियः । |
| | इत्युक्त्वा गिरिजा सा हि गिरीश्वरसुता मुने ! |
| | विरराम शिवं दध्यौ निर्विकारेण चेतसा । |
| | तदाकर्ण्य वचो देव्या ब्रह्मचारी स वै द्विजः । |
| | पुनर्वचनमाख्यातुं यावदेव प्रचक्रमे । |
| | उवाच गिरिजा तावत्स्वसखीं विजया द्रुतम् । |
| | **गिरिजोवाच—** |
| निवार्यतामालि ! किमप्ययं बटुः | वारणीयः प्रयत्नेन सख्ययं हि द्विजाधमः । |
| पुनर्विवक्षुः स्फुरितोत्तराधरः । | पुनर्वक्तुमनाश्चैव शिवनिन्दां करिष्यति । |
| न केवलं यो महतोऽपभाषते | हित्वैतत्स्थलमद्यैव यास्यामोऽन्यत्र मा चिरम् । |
| शृणोति तस्मादपि यः स पापभाक् । | यथा संभाषणं न स्यादनेनाऽविदुषा पुनाः । |
| | **ब्रह्मोवाच—** |
| | इत्युक्त्वा चोमया यावत्पादमुत्क्षिप्यते मुने ! |
| इतो गमिष्याम्यथ वेति वादिनी | असौ तावच्छिवः साक्षादालंबे प्रियया स्वयम् । |
| चचाल बाला स्तनभिन्नवल्कला । | कृत्वा स्वरूपं सुभगं शिवाध्यानं यथा तथा । |
| स्वरूपमास्थाय च तां कृतस्मितः | दर्शयित्वा शिवायै तामुवाचावाङ्मुखीं शिवः । |
| समाललम्बे वृषराजकेतनः । | प्रसन्नोऽस्मि वरं ब्रूहि नादेयं विद्यते तव । |
| अद्यप्रभृत्यवनताङ्गि ! तवास्मि दासः | अद्यप्रभृति ते दासस्तपोभिः क्रीत एव ते । |
| क्रीतस्तपोभिरिति वादिनि | |
| चन्द्रमौलौ । | क्रीतोऽस्मि तव सौन्दर्यात्क्षणमेकं युगायते । |
| अह्नाय सा नियमजं क्लममुत्ससर्ज | त्यज्यतां च त्वया लज्जा मम पत्नी सनातनी । |
| क्लेशः फलेन हि पुनर्नवतां विधत्ते । | मया परीक्षितासि त्वं बहुधा दृढमानसे ! । |
| अथ विश्वात्मने गौरी | |
| संदिदेश मिथः सखीम् । | तत्क्षमस्वापराधं मे लोकलीलानुसारिणः । |
| दाता मे भूभृतां नाथः | न त्वादृशीम्प्रणयिनीं पश्यामि च त्रिलोकके । |
| प्रमाणीक्रियतामिति । | सर्वथाहं तवाधीनः स्वकामः पूर्यतां शिवे ! । |

एहि प्रिये! मत्सकाशं पत्नी त्वं मे वरस्तव ।
इत्युक्ते देवदेवेन पार्वती मुदमाप सा ।
तपोजातं तु यत्कष्टं तज्जहौ च पुरातनम् ।
सर्वः श्रमो विनष्टोऽभूत्सत्यस्तु मुनिसत्तम! ।
फले जाते श्रमः पूर्वो जन्तोर्नाशमवाप्नुयात् ।
पितुर्गेहे मया सम्यग्गम्यते त्वदनुज्ञया ।

स तथेति प्रतिज्ञाय
विसृज्य कथमप्युमाम् ।
ऋषीञ्ज्योतिर्मयान्सप्त
सस्मार स्मरशासनः ।
तद्दर्शनादभूच्छंभो-
र्भूयान्दारार्थमादरः ।
क्रियाणां खलु धर्म्याणां
सपत्न्यो मूलकारणम् ।
सोऽहं तृष्णातुरैर्वृष्टिं
विद्युत्वानिव चातकैः ।
अरिविप्रकृतैर्देवैः
प्रसूतिं प्रति याचितः ।
तामस्मदर्थे युष्माभि-
र्याचितव्यो हिमालयः ।
विक्रियायै न कल्पन्ते
संबन्धाः सदनुष्ठिताः ।
ततः परममित्युक्त्वा
प्रतस्थे मुनिमण्डलम् ।
भगवानपि संप्राप्तः
प्रथमोद्दिष्टमास्पदम् ।
अलकामतिवाह्यैव
वसतिं वसुसंपदाम् ।

प्रसिद्धं क्रियतां तद्वै विशुद्धं परमं यशः ।
गन्तव्यं भवता नाथ! हिमवत्पार्श्वतः प्रभो! ।
याचस्व मां ततो भिक्षुर्भूत्वा लीलाविशारदः ।
एतस्मिन्नंतरे तात! शम्भुना सप्त एव ते ।
संस्मृता ऋषयः सद्यो विरहव्याकुलात्मना ।
ऋषयश्चैव ते सर्वे शम्भुना संस्मृता यदा ।
तदाऽऽजग्मुः स्वयं सद्यः कल्पवृक्षा इवापरे ।
अरुंधती तथाऽऽयाता साक्षात्सिद्धिरिवापरा ।
साधनीया विशेषेण लोकानां सिद्धिहेतवे ।
देवानां दुःखमुत्पन्नं तारकात्सुदुरात्मनः ।
ब्रह्मणा च वरो दत्तः किं करोमि दुरासदः ।
मूर्तयोऽष्टौ च याः प्रोक्ता मदीयाः परमर्षयः ।
ताः सर्वा उपकाराय न तु स्वार्थाय तत्स्फुटम् ।
तथा च कर्तुकामाहं विवाहं शिवया सह ।
तया वै सुतपस्तप्तं दुष्करं परमर्षिभिः ।
पार्वतीवचनाद्भिक्षुरूपो यातो गिरेर्गृहम् ।
अहं पावितवान्काले यतो लीलाविशारदः ।
मां ज्ञात्वा तौ परं ब्रह्म दम्पती परभक्तितः ।
दातुकामावभूतां च स्वसुतां वेदरीतितः ।

**स्वर्गाभिष्यन्दवमनं**
**कृत्वेवोपनिवेशितम् ।**
**कर्तव्यं वो न पश्यामि**
**स्याच्चेत्किं नोपपद्यते ।**
**मन्यते मत्पावनायैव**
**प्रस्थानं भवतामिह ।**

देवप्रेरणयाहं वै कृतवानस्मि निन्दनम् ।
स्वकन्यां नेच्छतो दातुं मह्यं हि मुनयोऽधुना ।
तस्माद्भवन्तो गच्छंतु हिमाचलगृहं ध्रुवम् ।
तत्र गत्वा गिरिवरं तत्पत्नीं च प्रबोधय ।
कथनीयं प्रयत्नेन वचनं वेदसम्मितम् ।
इत्येवं वचनं श्रुत्वा मुनयस्तेऽमलाशयाः ।
आनन्दं लेभिरे सर्वे प्रभुणानुग्रहीकृताः ।
गता आकाशमार्गेण यत्रास्ति हिमवत्पुरम् ।
दृष्ट्वा तां च पुरं दिव्यमृषयस्तेऽतिविस्मिताः ।
वर्णयन्तश्च स्वं पुण्यमब्रुवन्वै परस्परम् ।

**ऋषय ऊचुः—**

पुण्यवन्तो वयं धन्या दृष्ट्वैतद्धिमवत्पुरम् ।
यस्मादेवंविधे कार्ये शिवेनैव नियोजिताः ।
अलकायाश्च स्वर्गाच्च भोगवत्यास्तथा पुनः ।
विशेषेणामरावत्या दृश्यते पुरमुत्तमम् ।
उद्यानानि विचित्राणि प्रसन्नैः पूजितान्यथा ।
नराश्च देवताः सर्वे स्त्रियश्चाप्सरसं तथा ।
कर्मभूमौ याज्ञिकाश्च पौराणाः स्वर्गकाम्यया ।
कुर्वंति ते वृथा सर्वे विहाय हिमवत्पुरम् ।
यावन्न दृष्टमेतच्च तावत्सर्गपरा नराः ।
दृष्टमेतद्यदा विप्राः किं स्वर्गेण प्रयोजनम् ।

**ब्रह्मोवाच—**

इत्येवमृषिवर्यास्ते वर्णयन्तः पुरं च तत् ।
गता हैमालयं सर्वे गृहं सर्वसमृद्धिमत् ।
तान्दृष्ट्वा सूर्यसङ्काशान् हिमवान्विस्मितोऽब्रवीत
दूरादाकाशमार्गस्थान्मुनीन्सप्त सुतेजसः ।
सप्तैते सूर्यसङ्काशाः समायांति मदन्तिके ।
पूजा कार्या प्रयत्नेन मुनीनां च मयाधुना ।
वयं धन्या गृहस्थाश्च सर्वेषां सुखदायिनः ।

तथापि तावत्कांश्चि-
दाज्ञां मे दातुमर्हथ ।
विनियोगप्रसादा हि
किंकराः प्रभविष्णुषु ।
अस्तोतुः स्तूयमानस्य
वन्द्यस्यानन्यवन्दिनः ।
सुतासंबन्धविधिना
भव विश्वगुरोर्गुरुः ।
स ते दुहितरं साक्षा-
त्साक्षी विश्वस्य कर्मणाम् ।
वृणुते वरदः शंभु-
रस्मत्संक्रामितैः पदैः ।

येषां गृहे समायान्ति महात्मानो यदीदृशाः ।
यस्माद्भवन्तो मद्गेहमागता विष्णुरूपिणः ।
पूर्णानां भवतां कार्यं कृपणानां गृहेषु किम् ।
तथापि किंचित्कार्यं च सदृशं सेवकस्य मे ।
कथनीयं सुदयया सफलं स्याज्जनुर्मम ।

**ऋषय ऊचुः—**

शैलेन्द्र ! श्रूयतां वाक्यमस्माकं शुभकारणम् ।
शिवाय पार्वतीं देहि संहर्तुः श्वशुरो भव ।
अयाचितारं सर्वेशं प्रार्थयामास यत्नतः ।
तारकस्य विनाशाय ब्रह्मा सम्बन्धकर्मणि ।
नोत्सुको दारसंयोगे शङ्करो योगिनां वरः ।
विधेः प्रार्थनया देवस्तव कन्यां ग्रहीष्यति ।
दुहितुस्ते तपस्तप्तं प्रतिज्ञानं चकार सः ।
हेतुद्वयेन योगींद्रो विवाहं च करिष्यति ।
एतच्छ्रुत्वा वचस्तेषां मेर्वादीनां हिमाचलः ।
सुप्रसन्नतरोऽभूद्वै जहास गिरिजा हृदि ।
अरुंधती च तां मेनां बोधयामास कारणात् ।
नानावाक्यसमूहेनेतिहासैर्विविधैरपि ।
सप्तर्षयो महाभागा वचः शृणुत मामकम् ।
मदीयं च शरीरं वै पत्नी मेना सुतास्सुता ।
ऋद्धिसिद्धिश्च चान्यद्वै शिवस्यैव न चान्यथा ।
अथ शैलेश्वरः प्रीतो हिमवान्मुनिसत्तम ! ।
स्वपुरं रचयामास विचित्रं परमोत्सवम् ।

तथैव सर्वं परया मुदान्वित-
श्चक्रे गिरीन्द्रः स्वसुतार्थमेव ।
गर्गं पुरस्कृत्य महाप्रभावं
प्रस्तावयोग्यं च सुमंगलं हि ।

ते हिमालयमामन्त्र्य
पुनः प्राप्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं
तद्विसृष्टाः खमुद्ययुः ।

अथ शम्भुः समाहूय नन्द्यादीन् सकलान्गणान् ।
आज्ञापयामास मुदा गन्तुं स्वेन च तत्र वै ।

**श्रीशिव उवाच—**

अपि यूयं सह मया संगच्छध्वं गिरेः पुरम् ।
कियद्गणानिहास्थाप्य महोत्सवपुरःसरम् ।
तावत्स्त्रियः समाजग्मुर्हित्वा कामाननेकशः ।
बह्व्यास्ताः पुरवासिन्यः शिवदर्शनलालसाः ।

तस्मिन्मुहूर्ते पुरसुन्दरीणा-
मीशानसंदर्शनलालसानाम् ।
प्रासादमालासु बभूवुरित्थं
त्यक्तान्यकार्याणि विचेष्टितानि ।

मज्जनं कुर्वती काचित्तच्चूर्णसहिता ययौ ।
द्रष्टुं कुतूहलाढ्या च शंकरं गिरिजावरम् ।
रशनां बध्नती काचित्तयैव सहिता ययौ ।
वसनं विपरीतं वै धृत्वा काचिद्ययौ ततः ।
काचिद्धस्ते शलाकां च धृत्वांजनकरा प्रिया ।
अञ्जित्वैकाक्षि सन्द्रष्टुं ययौ शैलसुतावरम् ।
दृष्ट्वा तु शांकरं रूपं मोहं प्राप्तास्तदाऽभवन् ।
अथ विष्ण्वादयो देवा मुनयः सकुतूहलम् ।
हिमाचलप्रार्थनया विवेशान्तर्गृहं गिरेः ।
श्रुत्याचारं भवाचारं विधाय च यथार्थतः ।
शिवामलंकृतां चक्रुः शिवदत्तविभूषणैः ।
एतस्मिन्नन्तरे तत्र गर्गाचार्यप्रणोदितः ।
हिमवान्मेनया सार्धं कन्यां दातुं प्रचक्रमे ।
हैमं कलशमादाय मेना चार्धांगमाश्रिता ।
हिमाद्रेश्च महाभागा वस्त्राभरणभूषिता ।
पाद्यादिभिस्ततः शैलः प्रहृष्टः सपुरोहितः ।
तं वरं वरयामास वस्त्रचन्दनभूषणैः ।

अथौषधीनामधिपस्य वृद्धो
तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान्सुताया
विवाहदीक्षाविधिमन्वतिष्ठत् ।

ततो हिमाद्रिणा प्रोक्तां द्विजास्तिथ्यादिकीर्तने ।
तच्छ्रुत्वा वचनं तेषां सुहृदां स हिमालयः ।
स्वकन्यादानमकरोच्छिवाय विधिनोदितः ।
इमां कन्यां तुभ्यमहं ददामि परमेश्वर ! ।

तस्याः करं शैलगुरूपनीतं
जग्राह ताम्राङ्गुलिमष्टमूर्तिः ।
उमातनौ गूढतनोः स्मरस्य
तच्छङ्किनः पूर्वमिव प्ररोहम् ।

वधूं द्विजः प्राह तवैष वत्से !
वह्निर्विवाहं प्रति कर्मसाक्षी ।
शिवेन भर्त्रा सह धर्मचर्या
कार्या त्वया मुक्तविचारयेति ।

एहि विश्वात्मने वत्से !
भिक्षासि परिकल्पिता ।
अर्थिनो मुनयः प्राप्तं
गृहमेधिफलं मया ।

पाणिपीडनविधेरनन्तरं
शैलराजदुहितुर्हरं प्रति ।
भावसाध्वसपरिग्रहादभू-
त्कामदोहदसुखं मनोहरम् ।

समदिवसनिशीथं सङ्गिनस्तत्र
शंभोः शतमगमदृतूनां साग्रमेका
निशेव ।
न स सुरतसुखेभ्यश्छिन्नतृष्णो
बभूव ज्वलन इव समुद्रान्तर्गत-
स्तज्जलौघैः ।

भार्यार्थं परिगृह्णीष्व प्रसीद सकलेश्वर ! ।
तस्मै रुद्राय महते मन्त्रेणानेन दत्तवान् ।
हिमाचलो निजां कन्यां पार्वतीं त्रिजगत्प्रभुम् ।
वेदमंत्रेण गिरिशो गिरिजाकरपङ्कजम् ।
जग्राह स्वकरेणाशु प्रसन्नः परमेश्वरः ।
तस्मिन्नवसरे ज्ञात्वानुकूलं समयं रतिः ।
किमर्थं प्राणनाथो मे निःस्वार्थं भस्मसात्कृतः ।
जीवयात्रा पतिं मे हि कामव्यापारमात्मनि ।
इति तद्वचनं श्रुत्वा प्रसन्नोऽभून्महेश्वरः ।
सुधादृष्ट्या शूलभृतो भस्मतो निर्गतः स्मरः ।
शिवः स भगवान् साक्षात्कैलासमगमद्यदा ।
सौख्यं च विविधं चक्रुर्गणाः सर्वे सुहर्षिताः ।

* * *

शय्यां रतिकरीं कृत्वा पुष्पचन्दनचर्चिताम् ।
अद्भुतां तत्र परमां भोगवस्त्वन्वितां शुभाम् ।
स रेमे तत्र भगवाञ्शम्भुर्गिरिजया सह ।
सहस्रवर्षपर्यन्तं देवमानेन मानदः ।
हरे भोगप्रवृत्ते तु लोकधर्मप्रवर्तिनी ।

महान् कालो व्यतीताय तयोः क्षण इवानघ ! ।

दिव्यं वर्षसहस्रं च शंभोः संभोगकर्म तत् ।

× × ×

पूर्णे वर्षसहस्रे च गत्वा तत्र सुरेश्वराः ! ।
येन वीर्यं पतेद्भूमौ तत् करिष्यथ निश्चितम् ।
तत्र वीर्ये च भविता स्कन्दनामा प्रभोः सुतः ।
सुन्दरः सुभगः श्रीमांस्तेजस्वी प्रीतिवर्धनः ।

तथाविधेऽनङ्गरसप्रसङ्गे
मुखारविन्दे मधुपः प्रियायाः ।
संभोगवेश्म प्रविशन्तमन्त-
र्ददर्श पारावतमेकमीशः ।
प्रभो ! प्रसीदाशु सृजात्मपुत्रं
यं प्राप्य सेनान्यमसौ सुरेन्द्रः ।
स्वर्लोकलक्ष्मीप्रभुतामवाप्य
जगत्त्रयं पाति तव प्रसादात् ।
त्वं सर्वभक्षो भव भीमकर्मा
कुष्ठाभिभूतोऽनलधूमगर्भः ।
इत्थं शशापाद्रिसुता हुताशं
रुष्टा रतानन्दसुखस्य भङ्गात् ।
स पावकालोकरुषा विलक्षां
स्मरत्रपास्मेरविनम्रवक्त्राम् ।
विनोदयामास गिरीन्द्रपुत्रीं
शृङ्गारगर्भैर्मधुरैर्वचोभिः ।
आससाद सुनासीरं
सदसि त्रिदशैः सह ।
एष त्रैयम्बकं तीव्रं
वहन्वह्निर्महन्महः ।
दृष्ट्वा तथाविधं वह्नि-
मिन्द्रः क्षुब्धेन चेतसा ।
व्यचिन्तयच्चिरं किंचि-
त्कंदर्पद्वेषिरोषजम् ।
तत्र माहेश्वरं धाम
संचक्राम हविर्भुजः ।
गङ्गायामुत्तरङ्गाया-
मन्तस्तापविपद्धृति ।

### शिव उवाच—

हे हरे हे विधे ! देवाः ! सर्वे शृणुत मद्वचः ।
सर्वथाहं प्रसन्नोऽस्मि वरान्वृणुत ऐच्छिकान् ।
देवकार्यं कुरु विभो ! रक्ष देवान् महेश्वर ! ।

करोतु शम्भुः संभोगं पार्वत्या सह निर्जने ।
जहि दैत्यान् कृपां कृत्वा तारकादीन् महाप्रभून् ।
इत्याकर्ण्य वचस्तेषां सुराणां भगवान्भवः ।
प्रत्युवाच विषण्णात्मा दूयमानेन चेतसा ।

हे विष्णो हे विधे ! देवाः! सर्वेषां वो मनोगतिः ।

यद्भावि तद्भवत्येव कोऽपि नो तन्निवारकः ।
यज्जातं तज्जातमेव प्रस्तुतं शृणुताऽमराः ! ।
शिरस्तः स्खलितं वीर्यं को ग्रहीष्यति मेऽधुना ।
स गृह्णीयादिति प्रोच्य पातयामास तद्भुवि ।
अग्निर्भूत्वा कपोतो हि प्रेरितः सर्वनिर्जरैः ।
अभक्षच्छांभवं वीर्यं चञ्च्वा तु निखिलं तदा ।
ज्ञात्वा तद्वृत्तमखिलं महाक्रोधयुता शिवा ।
इति शप्त्वा शिवा वह्निं सहेशेन नगात्मजा ।
जगाम स्वालयं शीघ्रमसंतुष्टा ततो मुने ! ।

गत्वा शिवा शिवं सम्यक् बोधयामास यत्नतः ।

कृशानुरेतसो रेत-
स्यादते सरिता तया ।
निश्चक्राम ततः सौख्यं
हव्यवाहो वहन्बहु ।
अमोघं शांभवं बीजं
सद्यो नद्योज्झितं महत् ।
तासामभ्युदरं दीप्तं
स्थितं गर्भत्वमागमत् ।
स्वरूपमास्थाय ततो हुताशस्व-
सन्वलत्कम्पकृताञ्जलिः सन् ।
प्रवेपमानो नितरां स्मरारि-
मिदं वचो व्यक्तमथाभ्युवाच ।
त्वदीयसेवावसरप्रतीक्षै-
रभ्यर्थितः शक्रमुखैः सुरैस्त्वाम् ।
उपागतोऽन्वेष्टुमहं विहंग-
रूपेण विद्वन्समयोचितेन ।
पिबन्स तस्याः स्तनयोः सुधौघं
क्षणंक्षणं साधु समेधमानः ।
प्रापाकृतिं कामपि षड्भिरेत्य
निषेव्यमाणः खलु कृत्तिकाभिः ।
श्रुत्वेति वाक्यं हृदयप्रियायाः
कौतूहलिन्या विमलस्मितश्रीः ।
सान्द्रप्रमोदोदयसौख्यहेतु-
भूतं वचोऽवोचत चन्द्रचूडः ।
जगत्त्रयीनन्दन एष वीरः
प्रवीरमातुस्तव नन्दनोऽस्ति ।

अजीजनत्परं पुत्रं गणेशाख्य मुनीश्वर ! ।
असहञ्शिवरेतस्तद्धिमाद्रिः कम्पमुद्वहन् ।
गंगायां प्राक्षिपत्तूर्णमसह्यं दाहपीडितः ।
गङ्गयाऽपि च तद्वीर्यं दुःसहं परमात्मनः ।
निःक्षिप्तं हि शरस्तम्बे तरंगैः स्वैर्मुनीश्वर ! ।
पतितं तत्र तद्रेतो द्रुतं बालो बभूव ह ।
ततः स वह्निर्विकलः सांजलिर्नतको मुने ।
अस्तौच्छिवं सुखी नात्मा वचनं चेदमब्रवीत् ।
देवदेव महेशान ! मूढोऽहं तव सेवकः ।
क्षमस्व मेऽपराधं हि मम दाहं निवारय ।

ग्रहीतुं तं मनश्चक्रुः सर्वास्ताः कृत्तिका स्त्रियः ।
वादो बभूव तासां तद्ग्रहणेच्छापरो मुने ! ।
तद्वादशमनार्थं स षण्मुखानि चकार ह ।
अमुं रुदंतमानीय स्तन्यपानेन ताः प्रभो ! ।
वर्धयामासुरीशस्य सुतं तव रविप्रभम् ।
पुत्रं निरीक्ष्य च तदा जगदेकबन्धुः

| | |
|---|---|
| कल्याणि ! कल्याणकरः सुराणां<br>त्वत्तोऽपरस्याः कथमेष सर्गः ।<br>महोत्सवे तत्र समागतानां<br>गन्धर्वविद्याधरसुन्दरीणाम् । | प्रीत्यान्वितः परमया परया भवान्या । |
| संभावितानां गिरिराजपुत्र्या<br>गृहेऽभवन्मङ्गलगीतकानि ।<br>ततः कुमारं कनकाद्रिसारं<br>पुरंदरः प्रेक्ष्य धृतास्त्रशस्त्रम् । | |
| महेश्वरोपान्तिकवर्तमानं<br>शत्रोर्जयाशां मनसा बबन्ध ।<br>इति प्रबद्धाञ्जलिरेत्य नन्दी<br>निधाय कक्षामभि हेमवेत्रम् । | |
| प्रसादपात्रं पुरतो भविष्णु-<br>रथ स्मरारातिमुवाच वाचम् ।<br>पुरा सुरेन्द्रं सुरसंघसेव्यं<br>त्रिलोकसेव्यस्त्रिपुरासुरारिः ।<br>प्रीत्या सुधासारनिधारिणेव<br>ततोऽनुजग्राह विलोकनेन । | |
| रणोत्सुकेनान्धकशत्रुसूनुना<br>समं प्रयुक्तैस्त्रिदशैर्जिगीषुणा ।<br>महासुरं तारकसंज्ञकं द्विषं<br>प्रसह्य हन्तुं समनह्यत द्रुतम्<br>स दुर्निवारं मनसोऽतिवेगिनं<br>जयश्रियः संनयनं सुदुःसहम् । | तच्छ्रुत्वा वचनं शंभोर्मुनेर्विष्णवादयः सुराः ।<br>सर्वे प्रोचुः प्रसन्नास्या देवं पशुपतिं प्रभुम् ।<br>"कुमारेण हतो ह्येष तारको भविता प्रभो ! ।<br>तदर्थमेव संजातमिदं चरितमुत्तमम् ।"<br>तथेति मत्वा स विभुर्दत्तवांस्तनयं तदा ।<br>देवेभ्यस्तारकं हन्तुं कृपया परिभावितः । |

विजित्वरं नाम तदा महारथो
धनुर्धरः शक्तिधरोऽध्यरोहयत् ।
चमूप्रभुं मन्मथमर्दनात्मजं
विजित्वरीभिर्विजयश्रिया श्रितम् ।
श्रुत्वा सुराणां पृतनाभिरागतं
चित्ते चिरं चुक्षुभिरे महासुराः ।
ततो महेन्द्रस्य चराश्चभूचरा
रणान्तलीलारभसेन भूयसा ।
पुरः प्रचेलुर्मनसोऽतिवेगिनो
युयुत्सुभिः किं समरे विलम्ब्यते ।
सङ्ग्रामं प्रलयाय संनिपततो-
वेलामतिक्रामतो
वृन्दारासुरसैन्यसागरयुग-
स्याशेषदिग्व्यापिनः ।
कालातिथ्यभुजो बभूव बहलः
कोलाहलः क्रोषणः
शैलोत्तालतटीविघट्टनपटु-
र्ब्रह्माण्डकुक्षिंभरिः ।
दैत्योऽपि रोषकलुषो निशितैः
क्षुरप्रैराकर्णकृष्टधनुरुत्पतितैः स
भीमैः ।
तद्भीतिविद्रुतसमस्तसुरेन्द्रसैन्यो
गाढं जघान मकरध्वजशत्रुसूनुम् ।
उद्योतिताम्बरदिगन्तरमंशुजालैः
शक्तिः पपात हृदि तस्य महासुरस्य ।

शिवाज्ञया सुराः सर्वे ब्रह्मविष्णुमुखास्तदा ।
पुरस्कृत्य गुहं सद्यो निर्जग्मुर्मिलिता गिरेः ।
कुमारं च पुरस्कृत्य सर्वे ते जातसाध्वसाः ।
योद्धुकामाः सुरा जग्मुर्महीसागरसंगमम् ।
आजगाम द्रुतं तत्र यत्र देवाः स तारकः ।
सैन्येन महता सार्धं सुरैर्बहुभिरावृतः ।
सुरसैन्येन महता लोकपालैः समावृतः ।
तदा दुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः ।
विमानमारुह्य तदा महायशाः
स शांकरिः सर्वगुणैरुपेतः ।
श्रिया समेता परया बभौ महान्
संवीज्यमानश्चमरैर्महाप्रभैः ।
मिलितास्ते तदा सर्वे देवाः शक्रपुरोगमाः ।
अथाभूद्द्वंद्वयुद्धं हि सुरासुरविमर्दनम् ।
यं दृष्ट्वा हर्षिता वीराः क्लीबाश्च भयमागताः ।
तारको युयुधे युद्धे शक्रेण दितिजो बली ।
तदा च तेषां सुरदानवानां
बभूव युद्धं तुमुलं जयैषिणाम् ।
सुखावहं वीरमनस्विनां वै ।
भयावहं चैव तथेतरेषाम् ।
मही महारौद्रतरा विनष्टकैः
सुरासुरैर्वै पतितैरनेकशः ।
तस्मिन्नगम्यातिभयानका तदा
जाता महासौख्यवहा मनस्विनाम् ।
विनिश्चित्यासुरवधं शांकरिः स महाप्रभुः ।
विमानादवतीर्याथ पदातिरभवत्तदा ।
पद्भ्यां तदासौ परिधावमानो
रेजेऽतिवीरः शिवजः कुमारः ।
करे समादाय महाप्रभां तां
शक्तिं महोल्कामिव दीप्तदीप्ताम् ।

हर्षाश्रुभिः सह समस्तदिगीश्वराणां
शोकोष्णबाष्पसलिलैः सह
दानवानाम् ।
शक्त्या हृतासुरसुरेश्वरमापतन्तं
कल्पान्तवातहतभिन्नमि-
वाद्रिशृङ्गम् ।

इत्येवमुक्त्वा स तदा महाबलः
कुमारमुद्दिश्य ययौ च योद्धुम् ।
जग्राह शक्तिं परमाद्भुतां च
स तारको देववरान्बभाषे ।
कुमारो मेऽग्रतश्चाद्य भवद्भिश्च कथं कृतः ।
यूयं गतत्रपा देवा विशेषाच्छक्रमेश्वरौ (?) ।
इत्येवमुक्त्वा तु विधूय पुण्यं
निजं स तन्निंदनकर्मणा वै ।
जग्राह शक्तिं परमाद्भुतां च
स तारको युद्धवतां वरिष्ठः ।
तं बालान्तिकमायान्तं तारकासुरमोजसा ।
आजघान च वज्रेण शक्रो गुहपुरस्सरः ।
तं तारकं हंतुमनाः करशक्तिर्महाप्रभुः ।

दृष्ट्वा प्ररूढपुलकाञ्चितचारुदेहा
देवाः प्रमोदमगमंस्त्रिदशेन्द्र-
मुख्याः ।

विरराज महावीरः कुमारः शम्भुबालकः ।
शक्त्या तया जघानाथ कुमारस्तारकासुरम् ।
तेजसाढ्यः शंकरस्य लोकक्लेशकरं च तम् ।
पपात सद्यः सहसा विशीर्णांगोऽसुरः क्षितौ ।
तारकाख्यो महावीरः सर्वासुरगणाधिपः ।
हते तस्मिन्महादैत्ये तारकाख्ये महाबले ।
क्षयं प्रणीता बहवोऽसुरा देवगणैस्तदा ।
हिमालयस्तदागत्य स्वपुत्रैः परिवारितः ।
सबंधुः सानुगः शंभुस्तुष्टाव च शिवा गुहम् ।
स्नेहान्वितो भुजगभोगयुतो हि साक्षा-
त्सर्वेश्वरो हरिवृतः प्रमथैः परेशः ।
तदा नीराजितो देवैः सकलैर्मुदान्वितैः ।
जयशब्देन महता व्याप्तमासीन्नभस्तलम् ।

इति विषमशरारेः सूनुना जिष्णुनाजौ
त्रिभुवनवरशल्ये प्रोद्धृते दानवेन्द्रे ।
बलरिपुरथ नाकस्याधिपत्यं प्रपद्य
व्यजयत सुरचूडारत्नघृष्टाग्रपादः ।

कुमारः स्वगणैः सार्धमाजगाम शिवालयम् ।
सर्वे प्रसन्नतां याता विशेषाच्च शिवाशिवौ ।
ततः स भगवान् रुद्रो भवान्या जगदम्बया ।
सर्वैः स्तुतो जगामाथ स्वगिरिं स्वगणैर्वृषः ।

## कविकुलचूडामणि-कालिदासकृतीनां सर्वशास्त्र-समृद्धत्वपरिचयः ।

— नाट्यशास्त्रम् —

तौ संधिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् ।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् (कुमार. ७।९१)

पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।
बभूव कृतसंस्कारा चरितार्थैव भारती ॥ (रघु. १०।३६)

— मीमांसाशास्त्रम् —

तस्मै जयाशीः ससृजे पुरस्तात्सप्तर्षिभिस्तान्स्मितपूर्वमाह ।
विवाहयज्ञे विततेऽत्र यूयमध्वर्यवः पूर्ववृता मयेति (कुमार. ७।४७)

— योगशास्त्रम् —

ततो भुजंगाधिपतेः फणाग्रैरधः कथंचिद्धृतभूमिभागः ।
शनैः कृतप्राणविमुक्तिरीशः पर्यङ्कबन्धं निबिडं बिभेद (कुमार. ३।५९)

पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसम् ।
उत्तानपाणिद्वयसंनिवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये ॥ (कुमार. ३।४५)

— वेदान्तशास्त्रम् —

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ (कुमार. २.१०)

उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।
कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ (कुमार.२.१२)

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥ (कुमार. २.१३)

द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥ (कुमार. २.११)

स्वकालपरिमाणेन व्यस्तरात्रिंदिवस्य ते ।
यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥ (कुमार. २.८)

स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया ।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥ (कुमार. २.७)

नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने ।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ (कुमार. २.४)

तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥ (कुमार. २.६)

— धर्मशास्त्रम् —

इत्यसक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् (रघु. १२।१९)

समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी । राजगामी तस्यार्थसंचय इत्येतदमात्येन लिखितम् ।

देव ! दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिआ णिव्वुत्तपुंसवणा जाआ से सुणीअदि ।
राजा—ननु गर्भः पित्र्यं रिक्थमर्हति । (शाकु. ६ अंकः)

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि नियच्छतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति (शाकु. ६।२५)
नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥
मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते ॥
(रघु. १।६६–६७)

— ज्योतिषशास्त्रम् —

उपरागान्ते शशिनः समुपगता रोहिणी योगम् (शाकु. ७।२२)
निर्विष्टसारां पितृभिर्हिमांशोरन्त्यां कलां दर्श इवौषधीषु (रघु. १४।८०)
ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसंपदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् (रघु. ३।१३)
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥
(रघु. ३।२२)

जाव अंगारवो रासिं विअ अणुवंकं परिगमणं ण करेदि । (माल० ३ अंकः)

तिस्रस्त्रिलोकप्रथितेन सार्धमजेन मार्गे वसतीरुषित्वा ।
तस्मादपावर्तत कुण्डिनेशः पर्वात्यये सोम इवोष्णरश्मेः (रघु. ७।३३)

---

1 तुलनात्मकदृष्ट्या सुविमृश्यैवामावास्याविषये हि पाश्चात्यविदुषामितो विसंवादिनीयं विचारसरणिः—

"The sun to me is dark and silent as the moon
When she deserts the night, hid in her vacant cave."
—*Milton.*

ततः **प्रतस्थे कौबेरीं भास्वानिव** रघुर्दिशम् ।
**शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव** ( रघु ४।६६ )
संध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः ।
अतिष्ठन्मार्गमावृत्य रामस्येन्दोरिव **ग्रहः** ( रघु. १२।२८ )
स जहार तयोर्मध्ये मैथिलीं लोकशोषणः ।
**नभोनभस्ययोर्वृष्टिमवग्रह** इवान्तरे । ( रघु. १२।२९ )
**अगस्त्यचिह्नादयनात्समीपं दिगुत्तरा भास्वति संनिवृत्ते ।**
आनन्दशीतामिव बाष्पवृष्टिं हिमस्रुतिं हैमवतीं ससर्ज । ( रघु. १६।४४ )
तौ विदेहनगरीनिवासिनां **गां गताविव दिवः पुनर्वसू ।**
मन्यते स्म पिबतां विलोचनैः पक्ष्मपातमपि वञ्चनां मनः । ( रघु. ११।३६ )
जिगमिषुर्धनदाध्युषितां **दिशं रथयुजा परिवर्तितवाहनः ।**
**दिनमुखानि रविर्हिमनिग्रहैर्विमलयन्मलयं नगमत्यजत्** ( रघु.२५ )
तस्य प्रभानिर्जितपुष्परागं **पौष्यां तिथौ पुष्यमसूत** पत्नी ।
तस्मिन्नपुष्यन्नुदिते **समग्रां पुष्टिं जनाः पुष्य इव द्वितीये** । (रघु. १८।३२)
**दोषातनं बुधबृहस्पतियोगदृश्य-**
**स्तारापतिस्तरलविद्युदिवाभ्रवृन्दम्** । ( रघु. १३।७६ )
**ब्राह्मे मुहूर्ते किल** तस्य देवी कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥ ( रघु. ५।३६
**तारागणप्रवरभूषणमुद्वहन्ती**
**मेघावरोधपरिमुक्तशशाङ्कवक्त्रा ।**
ज्योत्स्नादुकूलममलं **रजनी** दधाना **वृद्धिं**
**प्रयात्यनुदिनं प्रमदेव बाला** ॥ ( ऋतु. ३।७ )
**दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः** । ( रघु. १२।२५ )
तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे **सुरद्विषश्चान्द्रमसी सुधेव** । ( रघु. २।३९ )
काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे **चित्रा-चन्द्रमसोरिव** ॥ ( रघु. १।४६ )
दृष्टिप्रपातं परिहृत्य तस्य कामः **पुरः शुक्रमिव प्रयाणे ।**
प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ॥ ( कुमार. ३।४३ )

— नीतिशास्त्रम् —

उपगतोऽपि च मण्डलनाभितामनुदितान्यसितातपवारणः ।
**श्रियमवेक्ष्य स रन्ध्रचलामभूदनलसोऽनलसोमसमद्युतिः**॥(रघु.९।१५)

— व्याकरणशास्त्रम् —

ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन्कृतार्थताम् ।
सोऽभवद्वरवधूसमागमः **प्रत्ययप्रकृतियोगसंनिभः** ( रघु. ११।५६ )

रामादेशादनुगता सेना तस्यार्थसिद्धये ।
पश्चादध्ययनार्थस्य **धातोरधिरिवाभवत्** ( रघु. १५।९ )

स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
**धातोः स्थान इवादेशं** सुग्रीवं संन्यवेशयत् ( रघु. १२।५८ )

यः कश्चन रघूणां परमेकः परंतपः ।
**अपवाद इवोत्सर्गं** व्यावर्तयितुमीश्वरः ( रघु. १५।७ )

— आयुर्वेदः —

**तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-**
जंम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।
**अन्तःसारं** घन ! तुलयितुं **नानिलः शक्ष्यति त्वां**
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ ( मेघ. पू. २० )

जानकी **विषवल्लीभिः परीतेव महौषधिः** ( रघु. १२।६१ )

**शरीरसादादसमग्रभूषणा मुखेन साऽलक्ष्यत लोध्रपाण्डुना ।**
( रघु. ३।२ )

— कोकशास्त्रम् —

पत्युः **शिरश्चन्द्रकलामनेन स्पृशेति** सख्या परिहासपूर्वम् ।
सा **रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान** (कुमार. ७।१९)

तस्य सावरणदृष्टसंधयः काम्यवस्तुषु नवेषु सङ्गिनः ।
**वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषयाः समागमाः** (रघु. १९।१६)

नाम वल्लभजनस्य ते मया प्राप्य भाग्यमपि तस्य काङ्क्ष्यते ।
लोलुपं ननु मनो ममेति त **गोत्रविस्खलित**मूचुरङ्गनाः ( रघु. १९।२४ )

चूर्णबभ्रु लुलितस्रगाकुलं **छिन्नमेखलमलक्तकाङ्कितम्** ।
उत्थितस्य शयनं विलासिनस्तस्य **विभ्रमरतान्य**पावृणोत् ( रघु. १९।२५ )

मित्रकृत्यमपदिश्य **पार्श्वतः प्रस्थितं तमनवस्थितं प्रियाः** ।
विद्म हे शठ ! **पलायनच्छलान्यञ्जसेति रुरुधुः कचग्रहैः** ( रघु. १९।३१ )

— सांख्यशास्त्रम् —

ब्राह्मं सरः कारणमाप्तवाचो **बुद्धेरिवाव्यक्तमुदाहरन्ति** । ( रघु. १३।६० )

## ABBREVIATIONS

| | | | |
|---|---|---|---|
| अलं. स. | अलंकारसर्वस्वम् | तैत्ति. | तैत्तिरीयोपनिषत् |
| उ. | उणादिसूत्रम् | द. रू. | दशरूपकम् |
| उत्तर. | उत्तररामचरितम् | पञ्च. | पञ्चतन्त्रम् |
| ऋ. | ऋग्वेदसंहिता | पा. | पाणिनीयं सूत्रम् |
| ऐत. | ऐतरेयोपनिषत् | मनु. | मनुस्मृतिः |
| कठोप. | कठोपनिषत् | याज्ञ. | याज्ञवल्क्यस्मृतिः |
| काव्या. | काव्यादर्शः | रघु. | रघुवंशम् |
| काव्या. सू. | काव्यालंकारसूत्राणि | वा. | वार्तिकम् |
| कौषी. | कौषीतक्युपनिषत् | शिक्षा. | शिक्षा |
| ग. | गणसूत्रम् | श्वेता. | श्वेताश्वतरोपनिषत् |
| गरुड. | गरुडपुराणम् | शाकु. | शाकुन्तलम् |
| छां. | छान्दोग्योपनिषत् | | |

## AUTHORS AND WORKS QUOTED OR REFERRED TO BY MALLINĀTHA IN HIS SANJĪVINĪ ON THE KUMĀRASAMBHAVA.

श्रीः

# संजीविनीव्याख्यासमेतं

# कुमारसंभवम्

## प्रथमः सर्गः

मातापितृभ्यां जगतो नमो वामार्धजानये।
सद्यो दक्षिणदृक्पातसंकुचद्वामदृष्टये ॥

अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम्।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥

शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम्।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम् ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया।
नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते ॥

भारती कालिदासस्य दुर्व्याख्याविषमूर्च्छिता।
एषा संजीविनी व्याख्या तामद्योज्जीवयिष्यति ॥

तत्रभवान्कालिदासः कुमारसंभवं काव्यं चिकीर्षुः 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' (काव्या. १।१४) इति शास्त्रात्काव्यादौ वक्ष्यमाणार्थानुगुणं वस्तु निर्दिशति—

**अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।**
**पूर्वापरौ तोयनिधी[1] वगाह्य[2] स्थितः पृथिव्या इव मानदण्डः ॥१॥**

अस्तीति ॥ उत्तरस्यां दिशि। अनेनास्य देवभूमित्वं सूच्यते। देवताऽऽत्माधिष्ठाता यस्य सः। एतेनास्य वक्ष्यमाणमेनकापरिणयपार्वतीजननादिचेतनव्यवहार-

---

पाठा०—१ वारिनिधी. २ विगाह्य.

योग्यत्वं । हिमस्यालयः स्थानमिति हिमालयो नाम[1] हिमालय इति सूचितम् प्रसिद्धः । अधिको राजाऽधिराजः । 'राजाहःसखिभ्यष्टच्' (पा. ५।४।९१) । न गच्छन्तीति नगा अचलाः, तेषामधिराजो नगाधिराजोऽस्ति[2] । कथंभूतः ? पूर्वापरौ प्राच्यपश्चिमौ तोयनिधी समुद्रौ वगाह्य प्रविश्य, अत एव पृथिव्या भूमेर्मानं हस्तादिना परिच्छेदः । भावे ल्युट्, तस्य दण्डः । यद्वा,–मीयतेऽनेनेति मानम् । करणे ल्युट्, स चासौ दण्डश्च स इव स्थितः, आयामपरिच्छेदकदण्ड इव स्थित इत्यर्थः । पूर्वापरसागरावगाहित्वं चास्य हिमालयस्यास्त्येव । उक्तं च ब्रह्माण्डपुराणे—'कैलासो हिमवांश्चैव दक्षिणे वर्षपर्वतौ । पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ ॥' अत्र हिमाचलस्योभयाब्धिव्याप्तिसाम्यान्मानदण्डत्वेनोत्प्रेक्षणादुत्प्रेक्षालंकारः । 'प्रकृतेऽप्रकृतगुणक्रियादिसंबन्धादप्रकृतत्वेन प्रकृतस्य संभावनमुत्प्रेक्षा' इत्यलंकारसर्वस्वकारः । अस्मिन्सर्गे प्रायेण वृत्तमुपजातिः । क्वचिदिन्द्रवज्रोपेन्द्रवज्रे च । तल्लक्षणं तु—'स्यादिन्द्रवज्रा यदि तौ जगौ गः' । 'उपेन्द्रवज्रा जतजास्ततो गौ' । 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति ॥ १ ॥

इतः परं षोडशभिः श्लोकैर्हिमालयं वर्णयति । तत्र नगाधिराजत्वं निर्वोढुमाह—

**यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।**
**भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २ ॥**

यमिति ॥ सर्वे च ते शैलाश्च सर्वशैलाः । 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' (पा.२।१।४९) इति समासः । यं हिमालयं वत्सं परिकल्प्य विधाय दोहदक्षे दोहनसमर्थे मेरौ दोग्धरि स्थिते सति । 'यस्य च भावेन भावलक्षणम्' (पा.२।३।३७) इति सप्तमी । पृथूपदिष्टां पृथुना वैन्येनोपदिष्टामीदृक्तया प्रदर्शितां धरित्रीम्, गोरूपधरामिति शेषः । 'गौर्भूत्वा तु वसुंधरा' इति विष्णुपुराणात् । 'अकथितं च' (पा. १।४।५१) इति कर्मत्वम् । भास्वन्ति च भास्वत्यश्च भास्वन्ति द्युतिमन्ति । ओषधिविशेषणं चैतत् । 'नपुंसकमनपुंसकेन—'

टिप्प०—1 केचित्त्वत्र 'अनामनगाधिराजः' इति पाठमादृत्य 'नास्ति नामो नमनं यस्येत्यनामः, स चासौ नगाधिराजश्चेति स तथा कर्मधारयः । 'अनाम' सविशेषणेनात्योन्नतिमत्त्वमुक्तम्' इत्याहुः । अत्र २ 'अस्ति'पदस्यादौ प्रयोगात्तेनैव परमात्मनः प्रतिपादनाच्च मङ्गलमाचरितवान्कालिदास इत्यवसेयम् ।

(पा.१।२।६९) इत्यादिना नपुंसकैकशेषः। रत्नानि मणीञ्जातिश्रेष्ठवस्तूनि च। 'रत्नं श्रेष्ठे मणावपि' इति विश्वः। 'जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते' इति यादवः। महौषधीश्च संजीवनीप्रभृतीश्च। क्षीरत्वेन परिणता इति शेषः। 'ताः क्षीरपरिणामिनीः' (१।१३।७८) इति विष्णुपुराणात्। दुदुहुः। 'दुहियाचि–' (वा० १०९०।११००) इत्यादिना द्विकर्मकत्वम्। अत्र प्रयोजकत्वेऽपि शैलानां 'पञ्चभिर्हलैः कर्षति ग्रामं ग्रामणीः' इतिवत्तत्समर्थाचरणात्कर्तृत्वेन व्यपदेशः। दुहेः स्वरितेत्त्वेऽप्यकर्त्रभिप्रायविवक्षायां परस्मैपदम्। अत्रार्थे प्रमाणम्—'गौर्भूमिरचलाः सर्वे कर्तारोऽत्र पयांसि च। ओषध्यश्चैव भास्वन्ति रत्नानि विविधानि च॥ वत्सश्च हिमवानासीद्दोग्धा मेरुर्महागिरिः॥' इति। एतेन वत्सस्य मातुः प्रेमास्पदत्वादस्य सारग्राहित्वं गम्यते। तथा चास्य नगस्य रत्नविशेषभोक्तृत्वान्नगाधिराजत्वं युक्तमिति भावः। अत्र हिमवद्वर्णनस्य प्रकृतत्वात्तद्गतौषधिरत्नानां द्वयानामपि प्रकृतत्वात्तेषां दोहनक्रियारूपसमानधर्मसंबन्धादौपम्यस्य गम्यत्वात्केवलप्राकरणिकविषयस्तुल्ययोगितानामालंकारः। तदुक्तम्—'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगिता॥' न चात्र रूपकपरिणामाद्यलंकारशङ्का कार्या, तेषामारोपहेतुत्वात् हिमहेमाचलादिषु वत्सत्वदोग्धृत्वादीनामागमसिद्धत्वेनानारोप्यमाणत्वादिति॥ २॥

ननु हिमदोषदूषितस्य तस्यात्यन्तमनभिगम्यत्वाच्छ्वित्रिण इव सर्वमपि सौभाग्यं विफलमित्याशङ्क्याह—

**अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्।**
**एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः॥३॥**

अनन्तेति॥ प्रभवत्यस्मादिति प्रभवः कारणम्। अनन्तानामपरिमितानां रत्नानां श्रेष्ठवस्तूनां प्रभवस्य यस्य हिमाद्रेर्हिमम्। कर्तृ। सुभगस्य भावः सौभाग्यम्। 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (पा. ७।३।१९) इत्युभयपदवृद्धिः। तद्विलुम्पतीति सौभाग्यविलोपि सौन्दर्यविघातकं न जातं नाभूत्। तथा हि–एको[1]

टिप्प०—1 श्लोकार्धमिदं दूषितं केनचिद्दारिद्र्यपीडितेन कविवराकेण–'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोरिति यो बभाषे। नूनं न दृष्टं कविनापि तेन दारिद्र्यदोषो गुणराशिनाशी' इति।

दोषो गुणसंनिपात इन्दोः किरणेष्वङ्क इव निमज्जति, अन्तर्लीयत इत्यर्थः । न हि स्वल्पो दोषोऽमितगुणाभिभावकः, किंतु कश्चिदिन्दुकलङ्कादिवद्गुणैरभिभूयते; अन्यथा सर्वरम्यवस्तुहानिप्रसङ्गादिति भावः । अत्रोपमानुप्राणितोऽर्थान्तरन्यासालंकारः[1] । तल्लक्षणं तु—(काव्या.२।१६९) 'ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन । तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥ इति दण्डी ॥ ३ ॥

**यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति ।**
**बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम् ॥ ४ ॥**

यश्चेति ॥ किंचेति चकारार्थः । यो हिमाद्रिरप्सरसां विभ्रममण्डनानि विलासालंकरणानि । अथवा विभ्रमो विपरीतन्यासः । 'विभ्रमस्त्वरयाऽकाले भूषास्थानविपर्यये' (द० रू० २।३९) इति दशरूपकात् । तेन मण्डनानि तेषां संपादयित्रीम् । एतद्धातुरागदर्शिन्योऽप्सरसः संध्याभ्रमेण प्रसाधनाय त्वरयन्तीति भावः । तथात्वे भ्रान्तिमदलंकारो व्यज्यते । 'कर्तृकर्मणोः कृति' (पा.२।३।६५) इति कर्मणि षष्ठी । वारिणां वाहका बलाहकाः । पृषोदरादित्वात्साधुः । तेषां छेदेषु खण्डेषु विभक्तः संक्रमितो रागो यया ताम् । एतेनाद्रेरभ्रंकषत्वं गम्यते । इदं विशेषणद्वयं संध्यायामपि योज्यम् । धातवः सिन्दूरगैरिकादयोऽस्य सन्तीति धातुमान् । नित्ययोगे मतुप् । तस्य भावो धातुमत्ता ताम् । धातुयोगित्वमिति संबन्धोऽपि वाच्यार्थः 'समासकृत्तद्धितेषु संबन्धाभिधानं भावप्रत्ययेन' इति वचनात् । लक्षणया नित्यानुषङ्गिकधातुमित्यर्थः । अकालसंध्यामिवानियतकालप्राप्तसंध्यामिव शिखरैर्बिभर्ति धत्ते । अत्र 'संध्या'शब्दस्य जातिवाचित्वाज्जात्युत्प्रेक्षा ॥ ४ ॥

**आमेखलं संचरतां घनानां छायामधःसानुगतां[1] निषेव्य ।**
**उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥५॥**

---

पाठा०—१ छायामिषे सानुगताम्; छायामधः सानुगता ।

---

टिप्प०—1 नारायणपण्डितस्तु 'वस्तुतस्त्वत्र विकस्वरालङ्कार एव । यत्र कस्यचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्य तत्प्रसिद्धावप्यपरितुष्यता कविना तत्समर्थनाय पुनर्विशेषान्तरन्यासविषया विन्यस्यते तत्र विकस्वरालङ्कारः ।' इत्याह ।

आमेखलमिति ॥ सिद्धा[1] अणिमादिसिद्धा देवयोनिविशेषाश्च । 'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' इत्यमरः । आ मेखलाभ्य आमेखलं नितम्बपर्यन्तम् । 'मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः' इति विश्वः । 'आङ् मर्यादाभिविध्योः' (पा.२।१।१३) इत्यव्ययीभावः। संचरतां घनानां मेघानामधःसानूनि मेघमण्डलादधस्तटानि गतां प्राप्ताम् । 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' (पा. २।१।२४) इति समासः । छायामनातपम् । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । निषेव्य वृष्टिभिरुद्वेजिताः क्लेशिताः सन्तः । 'उद्वेगः स्तिमिते क्लेशे भये मन्थरगामिनि' इति शब्दार्णवः । यस्य हिमाद्रेरातपवन्ति सातपानि शृङ्गाण्याश्रयन्ते, आश्रित्य स्थिता इत्यर्थः । अतिमेघमण्डलमस्यौन्नत्यमिति भावः ॥ ५ ॥

**पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।**
**विदन्ति[1] मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः ॥६॥**

पदमिति ॥ यस्मिन्नद्रौ किरातास्तुषारस्रुतिभिर्हिमनिस्यन्दैर्धौतं क्षालितं रक्तं शोणितं यस्य तत्तथोक्तम् । अतो दुर्ग्रहमिति भावः । हता द्विपा गजा यैस्तेषां हतद्विपानां केसरिणां सिंहानां पदं पादप्रक्षेपस्थानमदृष्ट्वापि नखरन्ध्रैर्नखद्रोणिभिर्मुक्तैर्मुक्ताफलैर्मार्गं विदन्ति जानन्ति । अत्र व्याधाः सिंहघातिनो गजेन्द्राश्च मुक्ताकरा इति भावः । 'करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि' (गरुड. ६९।१) इति ॥ ६ ॥

**न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।**
**व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम् ॥ ७ ॥**

न्यस्ताक्षरा इति ॥ यत्र हिमाद्रौ धातुरसेन सिन्दूरादिद्रवेण । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । न्यस्ताक्षरा लिखितवर्णा अत एव

पाठा०—१ विन्दन्ति.

टिप्प०—1 'अणिमा महिमा चैव लघिमा गरिमा तथा । प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः' इत्यष्टसिद्धियुक्ताः । सिद्धलक्षणं चोक्तम्—'अवाप्ताष्टगुणैश्वर्याः सिद्धाः सद्भिरुदाहृताः । तेषां कुलेऽपि ये जातास्तेऽपि सिद्धाः प्रकीर्तिताः' इति ।

कुञ्जरस्य ये बिन्दवः काये वयोविशेषभाविनः पद्मकाख्याः । 'पद्मकं बिन्दुजालकम्' इत्यमरः । त इव शोणा रक्तवर्णाः लिखितभागेष्विति शेषः । भूर्जत्वचो भूर्जपत्रवल्कलानि । 'भूर्जपत्रो भुजो भूर्जो मृदुत्वक्चर्मिका अपि' इति यादवः ; विद्याधरसुन्दरीणाम् । लिख्यन्ते येषु ते लेखाः पत्रिकाः । अनङ्गस्य लेखास्तेषां क्रियया, कामव्यञ्जकलेखकरणेनेत्यर्थः । उपयोगमुपकारं व्रजन्ति । दिव्याङ्गनाविहारयोग्योऽयं शैल इति भावः ॥ ७ ॥

**यः पूरयन्कीचकरन्ध्रभागान् दरीमुखोत्थेन समीरणेन ।**
**उद्गास्यतामिच्छति किंनराणां तान[1]प्रदायित्वमिवोपगन्तुम् ॥८॥**

य इति ॥ यो हिमाद्रिः दरी गुहा सैव मुखं तस्मादुत्थेनोत्पन्नेन । 'आतश्चोपसर्गे' (पा. ३।१।१३६) इति कप्रत्ययः । समीरणेन वायुना कीचका वेणुविशेषाः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः । तेषां रन्ध्रभागान्छिद्रप्रदेशान् । पूरयन्धमयन् । 'वांशिकोऽपि वंशरन्ध्राणि मुखमारुतेन पूरयति' इति प्रसिद्धिः । उद्गास्यतां देवयोनित्वादुच्चैर्गान्धारग्रामेण गानं करिष्यताम् । उक्तं च नारदेन—'षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः । न तु गान्धारनामानं स लभ्यो देवयोनिभिः ॥' इति । किंनराणां देवगायकानां तानप्रदायित्वम् । तानो नाम स्वरान्तरप्रवर्तको रागस्थितिप्रवृत्त्यादिहेतुरंशापरनामा वंशवाद्यसाध्यः प्रधानभूतः स्वरविशेषः । 'तानस्त्वंशस्वरो मतः' इत्यभिनवगुप्तः । 'गाता यं यं स्वरं गच्छेत्तं तं वंशेन तानयेत्' इति भरतः । तत्प्रदानशीलत्वं तानप्रदायित्वं वांशिकत्वमुपगन्तुमिच्छतीवेत्युत्प्रेक्षा । सा च दरीमुखोत्थेनेत्येकदेशविवर्तिरूपकोज्जीविता, मुखसाध्यत्वात्तानप्रदायित्वस्य । यत्रावयवरूपणादवयविरूपणं गम्यते तदेकदेशविवर्ति रूपकम् । गम्यते चात्रावयविनः पुंसो रूपणं यच्छब्दनिर्दिष्टे हिमाद्रावित्यलं बहुना ॥ ८ ॥

**कपोल[2]कण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।**
**यत्र स्रुतक्षीरतया प्र[3]सूतः सानूनि ग[4]न्धः सुरभीकरोति ॥ ९ ॥**

कपोलेति ॥ यत्र हिमाद्रौ करिभिर्गजैः । कपोलकण्डूर्गण्डस्थलकण्डूर्विनेतुमपनेतुं विघट्टितानां घर्षितानां सरलद्रुमाणां संबन्धि स्रुतानि करिकपोलघर्षणात्क्षरितानि क्षीराणि येषां तेषां भावस्तत्ता तया हेतुना प्रसूत उत्पन्नो गन्धः

पाठा०—१ स्थान. २ कण्डूम्. ३ समीरः. ४ गन्धैः.

सानूनि सुरभीकरोति । एतेनास्य गजाकरत्वं गम्यते । तथा च गजायुर्वेदे— 'हिमवद्विन्ध्यमलया गजानां प्रभवा नगाः' इति ॥ ९ ॥

**वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।**
**भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥ १० ॥**

वनेचराणामिति ॥ यत्र हिमाद्रौ रजन्यां दर्यः कन्दरा एव गृहास्तेषामुत्सङ्गेष्वभ्यन्तरेषु निषक्ताः संक्रान्ता भासो यासां ता ओषधयस्तृणज्योतींषि । 'अम्भावोषधिषु च तेजो निधाय रविरस्तं याति' इत्यागमः । वनितानां सखायो वनितासखाः । 'राजाहःसखिभ्यष्टच्' (पा.५।४।९१) । तेषाम् , रममाणानामित्यर्थः । वने चरन्तीति वनेचराः किराताः । 'चरेष्टः' (पा.३।२।१६) इति टप्रत्ययः । 'तत्पुरुषे कृति बहुलम्' (पा. ६।३।१४) इत्यलुक् । तेषां वनेचराणाम् । अतैलपूराः, अनपेक्षिततैलसेका इत्यर्थः । सुरते सुरतकर्मणि प्रदीपा भवन्ति । अत्रौषधीष्वारोप्यमाणस्य प्रदीपत्वस्य प्रकृतसुरतोपयोगित्वात्परिणामालंकारः । तदुक्तम्—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' (अलं. १६) इति । तथा प्रदीपकारणतैलपूरणनिषेधादकारणकार्योत्पत्तिलक्षणा विभावना चेत्युभयोः संसृष्टिः ॥ १० ॥

**उद्वेजयत्यङ्गुलिपार्ष्णिभागान्मार्गे शिलीभूतहिमेऽपि यत्र ।**
**न दुर्वहश्रोणिपयोधरार्ता भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥ ११ ॥**

उद्वेजयतीति ॥ यत्र हिमाद्रौ, शिलीभूतं घनीभूतं हिमं यत्र तस्मिन् । अत एवाङ्गुलीनां पार्ष्णीनां च भागान्प्रदेशानुद्वेजयत्यतिशैत्यात्क्लेशयत्यपि मार्गे । श्रोणयश्च पयोधराश्च श्रोणिपयोधरम् । दुर्वहेण दुर्धरेण श्रोणिपयोधरेणार्ताः पीडिताः । आङ्पूर्वादृच्छतेः क्तः । 'उपसर्गादृति धातौ' (पा.६।१।९१) इति वृद्धिः । अश्वानां मुखानीव मुखानि यासां ता अश्वमुख्यः किंनरस्त्रियः । उष्ट्रमुखवत्समासः । 'स्यात्किनरः किंपुरुषस्तुरंगवदनो मयुः' इत्यमरः । मन्दां मन्थरां गतिं न भिन्दन्ति, न त्यजन्तीत्यर्थः । पादपीडाकरेऽप्यतिभारभङ्गुरशरीरतया न शीघ्रं गन्तुं शक्यत इति भावः ॥ ११ ॥

**दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।**
**क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव ॥ १२ ॥**

दिवाकरादिति ॥ यो हिमाद्रिर्दिवा दिवसे भीतं भयाविष्टमिव । उलूक-

---

पाठा०—१ अतीव.

मिवेति च ध्वनिः । गुहासु लीनमन्धकारं ध्वान्तम् । दिवा दिनं करोतीति दिवाकरस्तस्माद्दिवाकरात् । 'दिवाविभानिशाप्रभाभास्कर–' (पा. ३।२।२१) इत्यादिना टप्रत्ययः । 'भीत्रार्थानां भयहेतुः' (पा. १।४।२५) इत्यपादानत्वात्पञ्चमी । रक्षति त्रायते । ननु क्षुद्रसंरक्षणमनर्हमित्याशङ्क्याह—क्षुद्र इति । उच्चैःशिरसामुन्नतानां शरणं प्रपन्ने शरणागते क्षुद्रे नीचेऽपि सति सज्जन इव नूनं ममत्वं ममायमित्यभिमानः, अस्तीति शेषः । 'मम'शब्दात्त्वप्रत्ययः । अर्थान्तरन्यासोऽलंकारः ॥ १२ ॥

**लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः ।**
**यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति वालव्यजनैश्चमर्यः ॥ १३ ॥**

लाङ्गूलेति ॥ चमर्यो मृगीविशेषाः । इतस्ततो लाङ्गूलानि वालधयः । 'पुच्छोऽस्त्री लोमलाङ्गूले वालहस्तश्च वालधिः' इत्यमरः । तेषां विक्षेपैर्विधूननैर्विसर्पिण्यो विसृमराः शोभाः कान्तयो येषां तैश्चन्द्रमरीचिभिरिव गौरैः शुभ्रैः । 'गौरः करीषे सिद्धार्थे शुक्ले पीतेऽरुणेऽपि च' इति यादवः । 'उपमानानि सामान्यवचनैः' (पा. २।१।५५) इति समासः । वालव्यजनैश्चामरैर्यस्य हिमाद्रेर्गिरिराजशब्दं 'गिरिराज' इति नामार्थयुक्तमभिधेयवन्तं कुर्वन्ति । राजानो हि छत्रचामरादिचिह्निता इति भावः ॥ १३ ॥

**यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम् ।**
**दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥**

यत्रेति ॥ यत्र हिमाद्रौ, अंशुकाक्षेपेण वस्त्रापहरणेन विलज्जितानां किंपुरुषाङ्गनानां किंनरस्त्रीणां यदृच्छया दैवगत्या दरीगृहद्वारेषु विलम्बिबिम्बा लम्बमानमण्डला जलदास्तिरस्करिण्यो जवनिका भवन्ति । 'प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा' इत्यमरः । 'तिरसोऽन्यतरस्याम्' (पा. ८।३।४२) इति सत्वम् । अत्र जलदेष्वारोप्यमाणस्य तिरस्करिणीत्वस्य प्रकृतोपयोगित्वात्परिणामालंकारः ॥ १४ ॥

---

पाठा०—१ चान्द्र. २ द्वारि.

---

टिप्प०—1 अयं श्लोको मम्मटेन दूषितः–'अत्राचेतनस्य तमसो दिवाकरात्त्रासो न संभवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणम् ? । संभावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्न इति ।

**भागीरथीनिर्झरसीकराणां वोढा मुहुः कम्पितदेवदारुः ।**
**यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥ १५ ॥**

भागीरथीति ॥ भागीरथीनिर्झरसीकराणां गङ्गाप्रवाहपयःकणानाम् । कर्मणि षष्ठी । वोढा प्रापकः । वहेस्तृच् । मुहुः पुनःपुनः सद्यो वा । 'पौनःपुन्ये भृशार्थे च सद्यो वा स्यान्मुहुःपदम्' इति वैजयन्ती । कम्पिता देवदारवो येन स तथोक्तः । भिन्नानि विश्लेषितानि शिखण्डिनां बर्हाणि गतिलाघवार्थं किरातकटिबद्धानि येन स तथोक्तः । क्रमाद्विशेषणत्रयेण शैत्यसौरभ्यमान्द्यान्युक्तानि । यस्य हिमाद्रेर्वायुः । अन्विष्टमृगैर्मार्गितमृगैः । श्रान्तैरिति भावः । 'अन्विष्टं मार्गितं मृगितम्' इत्यमरः । किरातैरासेव्यते ॥ १५ ॥

**सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्परिवर्तमानः ।**
**पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥ १६ ॥**

सप्तर्षीति ॥ सप्त च ते ऋषयश्च सप्तर्षयः । 'दिक्संख्ये संज्ञायाम्' (पा.२।१।५०) इति समासः । तेषां हस्तैरवचितेभ्यो लूनेभ्योऽवशेषाण्यवशिष्टानि । शेषोऽप्रधानसंतापे त्रिष्वन्यत्रोपयुज्यते' इति केशवः । कर्मण्यण्प्रत्ययः । अनेन पद्मानां साफल्यं सूचितम् । यस्य हिमाद्रेः । रोहन्तीति रुहाणि । 'इगुपधज्ञाप्रीकिरः कः' (पा.३।१।१३५) इति कप्रत्ययः । अग्र उपरि यानि सरांसि तेषु रुहाणि पद्मान्यधः परिवर्तमानो भ्रमन्विवस्वान्सूर्य ऊर्ध्वमुखैर्मयूखैः प्रबोधयति विकासयति । न कदाचिदधोमुखैः । अतिमार्तण्डमण्डलत्वादग्रभूमेरिति भावः । 'सप्तर्षिमण्डलं ध्रुवादप्यूर्ध्वम्' इति ज्यौतिषिकाः । अतस्तेषामग्रसरोरुहभागित्वं युक्तम् ॥ १६ ॥

**यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।**
**प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १७ ॥**

यज्ञाङ्गेति ॥ यस्य हिमाद्रेर्यज्ञाङ्गानां यज्ञसाधनानां सोमलतादीनां योनिः प्रभवस्तस्य भावस्तत्त्वम् । 'यज्ञाङ्गार्थं मया सृष्टो हिमवानचलेश्वरः' इति विष्णुपुराणात् । धरित्रीधरणक्षमं भूभारधरणयोग्यं सारं बलं च । 'सारो बले स्थिरांशे च' इत्यमरः । अवेक्ष्य ज्ञात्वा प्रजापतिः स्वयमेव कल्पितो यज्ञभागो यस्मिंस्त-

---

पाठा०—१ आचरित.

तथोक्तम् । 'सोमस्य राज्ञः कुरङ्ग इन्दोः श्रृङ्गी समुद्रस्य शिशुमारो हिमवतो हस्ती' इति श्रुतेरिति भावः । शैलानामाधिपत्यमधिपतित्वम् । 'पत्यन्तपुरोहितादिभ्यो यक्' (पा. ५।१।१२८) इति यक्प्रत्ययः । अन्वतिष्ठत्, ददाति स्मेत्यर्थः । उक्तं च ब्रह्माण्डपुराणे—'शैलानां हिमवन्तं च नदीनां चैव सागरम् । गन्धर्वाणामधिपतिं चक्रे चित्ररथं विधिः' इति ॥ १७ ॥

संप्रति कथां प्रस्तौति—

**स मानसीं मेरुसखः पितॄणां कन्यां कुलस्य स्थितये स्थितिज्ञः ।**
**मेनां मुनीनामपि माननीयामात्मानुरूपां विधिनोपयेमे ॥ १८ ॥**

स इति ॥ मेरोः सखा मेरुसखः । बन्धुसंपन्न इति भावः । स्थितिज्ञो मर्यादाभिज्ञः । अनेन श्रुतसंपत्तिः सूच्यते । स हिमवान्पितॄणां मानसीं मनःसंकल्पजन्यां मुनीनामपि माननीयाम् । योगिब्रह्मवादिभ्यां पूज्यामित्यर्थः । उक्तं च विष्णुपुराणे (१।१०,१८-१९)—'तेभ्यः शुभास्पदं जज्ञे मेनका हरिणी तथा । ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज ॥' इति । आत्मानुरूपां कुलशीलसौन्दर्यादिभिः सदृशीं मेनां मेनकादेवीति नामवतीं कन्यां कुलस्य स्थितये प्रतिष्ठायै विधिना यथाशास्त्रेणोपयेमे परिणीतवान् । 'उपाद्यमः स्वीकरणे' (पा. १।३।५६) इत्यात्मनेपदम् । 'तेषां तु मानसी कन्या मेना नाम महागिरेः । पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते ॥' इति ब्रह्माण्डपुराणात् ॥ १८ ॥

**कालक्रमेणाथ तयोः प्रवृत्ते स्वरूपयोग्ये सुरतप्रसङ्गे ।**
**मनोरमं यौवनमुद्वहन्त्या गर्भोऽभवद्भूधरराजपत्न्याः ॥ १९ ॥**

कालक्रमेणेति ॥ अथ कालक्रमेण, गच्छता कालेनेत्यर्थः । तयोर्मेनकाहिमवतोः स्वरूपयोग्ये सौन्दर्यानुगुणे । यद्वा, रूप्यते निश्चीयतेऽनेनेति रूपं ज्ञानं तद्योग्ये, शास्त्रानुसारिणीत्यर्थः । सुरतप्रसङ्गे सुरतकर्मणि प्रवृत्ते सति मनोरमं यौवनमुद्वहन्त्या भूधरराजपत्न्या मेनकाया गर्भोऽभवत् ॥ १९ ॥

**असूत सा नागवधूपभोग्यं मैनाकमम्भोनिधिबद्धसख्यम् ।**
**क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्राववेदनाज्ञं कुलिशक्षतानाम् ॥ २० ॥**

असूतेति ॥ सा मेना नागवधूपभोग्यम्, नागकन्यापरिणेतारमित्यर्थः ।

अम्भोनिधिना बद्धसख्यं समुद्रकृतमैत्रीकम् । सख्यमूलं सूचयति—पक्षच्छिदि पक्षच्छेत्तरि । 'सत्सूद्विष-' (पा.३।२।६१) इत्यादिना क्विप्प्रत्ययः । वृत्रशत्रौ क्रुद्धे कुपिते सत्यपि कुलिशक्षतानां वज्रप्रहाराणाम् । संबन्धसामान्ये षष्ठी । जानातीति ज्ञः । 'इगुपधज्ञा-' (पा.३।१।१३५) इति कप्रत्ययः । वेदनानां ज्ञः । अथवा वेदनां जानातीति वेदनाज्ञः । 'आतोऽनुपसर्गे कः' (पा.३।२।३) इति कप्रत्ययः । 'उपपदमतिङ्' (पा.२।२।१९) इति समासः । स न भवतीत्यवेदनाज्ञस्तम्, कुलिशक्षतवेदनानभिज्ञमित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । पक्षच्छेदोद्यतशक्रात्त्राणाय शरणागमनमनयोः सख्यमूलमिति भावः । मैनाकं पुत्रमसूत । सर्वपर्वतपक्षच्छेदेऽप्ययमच्छिन्नपक्ष एवेति मैनाकस्योत्कर्षः । तादृक्पुत्रवत्त्वं हिमाद्रेरिति सार्थकं मैनाकस्य वर्णनम् । 'पिता न ज्ञायते यस्या भ्राता यदि न विद्यते । नोपयच्छेत्तु तां कन्यां धर्मलोपभयात्सुधीः ॥' इत्यभ्रातृककन्यापरिणयनिषेधात्प्रकृते पार्वती भ्रातृमत्येवेति सूचनार्थं मैनाकवर्णनमिति तात्पर्यार्थः ॥२०॥

**अथावमानेन[1] पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।**
**सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥ २१ ॥**

अथेति ॥ अथ मैनाकजननानन्तरं दक्षस्य प्रजापतेः कन्या भवस्य महादेवस्य पूर्वपत्नी पूर्वभार्या सती पतिव्रता । 'सती साध्वी पतिव्रता' इत्यमरः । सती नाम देवी । पितुर्दक्षस्य । कर्तरि षष्ठी । अवमानेन स्वभर्त्रवज्ञया प्रयुक्ता प्रेरिता योगेन योगमार्गेण विसृष्टदेहा त्यक्तदेहा सती । जन्मने पुनरुद्भवाय तां शैलवधूं मेनकां प्रपेदे । अत्र पुरा किल सती देवी दक्षाध्वरे तत्कृतां स्वभर्त्रवज्ञामसहमाना पितरं प्रसूं चोपेक्ष्य मत्कर्तव्यकार्यं त्वज्जामातैव करिष्यतीति निर्धार्य देवकार्याणि साधयितुं च योगाग्निना स्वशरीरं ददाहेति पुरावृत्तकथानुसंधेया ॥ २१ ॥

**सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्या ।**
**सम्यक्प्रयोगादपरिक्षतायां नीताविवोत्साहगुणेन संपत् ॥ २२ ॥**

सेति ॥ भव्या कल्याणी सा सती भूधराणामधिपेन हिमवता समाधिमत्यां

---

पाठा०—1 अपमानेन.

टिप्प०—1 पर्वतानां पक्षच्छेदश्चोक्तः—'सर्वेऽपि पर्वताः पूर्वं पक्षवन्तः किलाभवन् । ततस्तेषामवस्थानैर्वेगैः पक्षसमीरणैः । चूर्णीभूताञ्जनपदानवलोक्याथ वृत्रहा ॥ क्रुद्धः कुलिशमादाय पक्षच्छेदेन पर्वतान् । क्षणेन स्थावरीचक्रे' इत्यादिना ।

नियमवत्यां तस्यां मेनकायां सम्यक्प्रयोगात्साध्वाचरणाद्धेतोरपरिक्षतायामभ्रष्टायां नीतावुत्साहगुणेनोत्साहशक्त्या कर्त्र्या। संपदिवोदपाद्युत्पादिता। उत्पद्यतेर्ण्यन्तात्कर्मणि लुङ्। 'चिण्भावकर्मणोः' (पा. ३।१।६६) इति चिण्प्रत्ययः। 'चिणो लुक्' (पा.६।४।१०४) इति तस्य लुक्॥ २२॥

**प्रसन्नदिक्पांसुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि।**
**शरीरिणां स्थावरजंगमानां सुखाय तज्जन्मदिनं बभूव॥ २३॥**

प्रसन्नेति॥ प्रसन्ना निर्मला दिशो यस्मिंस्तत्प्रसन्नदिक्। पांसुविविक्ता रजोरहिता वाता यस्मिंस्तत्तथोक्तम्। शङ्खस्य स्वनात् स्वनस्य वाऽनन्तरं पुष्पवृष्टिर्यस्मिंस्तत्तथोक्तम्, तस्याः पार्वत्या जन्मदिनम्। स्थितिशीलाः स्थावराः शैलवृक्षादयः। 'स्थेशभासपिसकसो वरच्' (पा. ३।१।६६) इति वरच्प्रत्ययः। जंगम्यन्ते भृशं गच्छन्तीति जंगमा देवतिर्यङ्मनुष्यादयः। स्थावराश्च जंगमाश्च तेषां द्वयानामपि शरीरिणां सुखायानन्दाय बभूव॥ २३॥

**तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकासे।**
**विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव॥ २४॥**

तयेति॥ स्फुरत्प्रभामण्डलया तया दुहित्रा सवित्री जनयित्री। 'स्वरतिसूतिसूयतिधूञूदितो वा' (पा. ७।२।४४) इतीडागमः। विदूरस्याद्रेः प्रान्तभूमिर्विदूरभूमिः। 'अविदूरे विदूरस्य गिरेरुत्तुङ्गरोधसः। काकतालीयसीमान्ते मणीनामाकरो भवेत्॥' इति बुद्धः। 'नवमेघ'शब्दादुद्भिन्नया रत्नशलाकया रत्नाङ्कुरेणेव सुतरां चकासे रराज॥ २४॥

**दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा।**
**पुपोष लावण्यमयान्विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणि॥२५॥**

दिने दिन इति॥ लब्ध उदयो यया सा लब्धोदया, उत्पन्नेत्यर्थः। अभ्युदितेत्यन्यत्र। दिने दिने प्रतिदिनम्। 'नित्यवीप्सयोः' (पा. ८।१।४) इति वीप्सायां द्विरुक्तिः। परिवर्धमाना। उभयत्र समानमेतत्। सा बाला। चन्द्रमस इयं चान्द्रमसी लेखेव लावण्यमयान्कान्तिविशेषप्रचुरान्। 'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥' इति भूपालः। विशेषानवयवान्। 'विशेषोऽवयवे व्यक्तौ' इत्युत्पलमाला। ज्योत्स्नायामन्तर-

---

पाठा०—१ तूर्य. २ धरित्री. ३ वैदूर्यभूमिः. ४ नादात्.

मन्तर्धानं येषां तानि ज्योत्स्नान्तराणि ज्योत्स्नयान्तर्हितानि, तन्मयानीति यावत्। अन्याः कलाः कलान्तराणीव। सुप्सुपेति समासः। 'स्थानात्मीयान्यतादर्थ्यरन्ध्रान्तर्धिषु चान्तरम्' इति शाश्वतः। पुपोषोपचितवती। इयं वाक्योपमेत्याह दण्डी। तल्लक्षणं तु (काव्या. २।४३)–'वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते। एकानेकेव शब्दत्वात्सा तु वाक्योपमा द्विधा॥' इति॥ २५॥

**तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव।**
**उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम॥२६॥**

**तामिति**॥ बन्धुप्रियां तां बालां बन्धुजनः पित्रादिः। अभिजनादागतेनाभिजनेन, पित्रादिपूर्वबन्धुसंबन्धोपाधिकेनेत्यर्थः। 'अभिजनाः पूर्वबान्धवाः' इति काशिका। नाम्ना। पर्वतस्यापत्यं स्त्री पार्वती। 'तस्यापत्यम्' (पा.४।१।९२) इत्यण्प्रत्ययः। इति जुहावाहूतवान्। ह्वयतेर्लिटि रूपम्। पर्वतजन्यत्वोपाधिना पार्वतीति नाम्ना प्रसिद्धिरिति भावः। पश्चादभिजननामप्रवृत्त्यनन्तरं मात्रा जनन्या। 'उ' इति संबोधने। 'उ इति वितर्कसंबोधनपादपूरणेषु' इति गणव्याख्याने। 'मा'शब्दो निषेधे। उ हे वत्से! 'मा' मा कुर्वित्येवंरूपेण। तपसस्तपश्चर्यायाः। 'वारणार्थानामीप्सितः' (पा.१।४।२७) इत्यपादानत्वात्पञ्चमी। निषिद्धा निवारिता सती सुमुखी सा बाला उमाख्यां 'उमा' इत्याख्यां नामधेयं जगाम॥ २६॥

**महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम्।**
**अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा॥ २७॥**

**महीभृत इति**॥ पुत्राश्च दुहितरश्च पुत्राः। 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' (पा. १।२।६८) इत्येकशेषः। तेऽस्य सन्तीति पुत्रवान्। भूमार्थे मतुप्। तस्य पुत्रवतोऽपि, बह्वपत्यस्यापीत्यर्थः। महीभृतो हिमाद्रेर्दृष्टिश्चक्षुस्तस्मिन्नपत्ये तोके। 'अपत्यं तोकं तयोः समे' इत्यमरः। तस्यां पार्वत्यामित्यर्थः। तृप्तिं न जगाम। तथा हि—अनन्तपुष्पस्य नानाविधकुसुमस्यापि मधोर्वसन्तस्य संबन्धिनी द्विरेफमाला भृङ्गपङ्क्तिश्चूतस्य विकारे चूते चूतकुसुमे। 'अवयवे च प्राण्यौषधिवृक्षेभ्यः' (पा.४।३।१३५) इति विकारार्थोत्पन्नस्याण्प्रत्ययस्य लुक्प्रकरणे 'पुष्पमूलेषु बहुलम्' (वा० २९५०) इति पठनाल्लुक्। सविशेषः सातिशयः सङ्गो यस्याः सा तथोक्ता, अत्यन्तासक्तेत्यर्थः॥ २७॥

---

पाठा०—१ तपसे. २ संघा; संज्ञा.

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥ २८ ॥

प्रभेति ॥ प्रभामहत्या प्रकाशाधिकया शिखया ज्वालया दीप इव । शिखादीपयोरवयवावयविभावाद्भेदेन व्यपदेशः । त्रयो मार्गा यस्यास्तया त्रिमार्गया मन्दाकिन्या । तृतीयो द्यौर्लोक इति त्रिदिवः स्वर्गः । वृत्तिविषये 'त्रि'शब्दस्य त्रिभागवत्पूरणार्थत्वम् । पृषोदरादित्वात् 'दिव्'शब्दादकारागमः । पुंस्त्वं लोकात् । दीव्यतेर्घञर्थे कविधानम् । 'दीव्यन्त्यत्र जनाः' इति क्षीरस्वामी । तस्य मार्ग इव । संस्कारो व्याकरणजन्या शुद्धिस्तद्वत्या गिरा वाचा । 'भद्रैषां लक्ष्मीर्निहिताधि वाचि' (ऋ० ८।२।२३) इति श्रुतेरिति भावः । मनस ईषा मनीषा साऽस्यास्तीति मनीषी विद्वानिव । शकन्ध्वादित्वात् (वा० ३६३२) साधुः । तया पार्वत्या स हिमवान्पूतः शोधितश्च विभूषितश्च । अत्र शिखागिरोरविशिष्टयोरुपमानानर्हत्वान्न विशेषणाधिक्यदोषः । इयं मालोपमा ॥ २८ ॥

मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ॥ २९ ॥

मन्दाकिनीति ॥ सा पार्वती बाल्ये वयसि क्रीडानां रसः स्वादः, रुचिरिति यावत् । तं क्रीडारसम् । 'रसो गन्धे रसः स्वादे' इति विश्वः । निर्विशतीव भुञ्जानेव । निर्वेशो भृतिभोगयोः' इति विश्वः । 'आच्छीनद्योर्नुम्' (पा.७।१।८०) इति विकल्पान्नुमभावः । सखीनां मध्यगता सती मन्दाकिन्याः सैकतेषु पुलिनेषु वेदिकाभिः कन्दुकैः । क्रियया निर्वृत्तैः कृत्रिमैः । 'ड्वितः क्त्रिः' (पा.३।३।८८) इति क्त्रिप्रत्ययः । 'क्त्रेर्मम्नित्यम्' (पा.४।४।२०) इति मबागमश्च । पुत्रकैः पाञ्चालिकाभिः । 'पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः । 'संज्ञायां कन्' (पा.५।३।८७) इति कन्प्रत्ययः । मुहुः पुनः पुना रेमे ॥ २९ ॥

तां हंसमालाः शरदीव गङ्गां महौषधिं[1] नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥ ३० ॥

तामिति ॥ स्थिरः स्थेयानुपदेशः प्राग्भवीयो यस्यास्तादृशीम् , मेधाविनी-

---

पाठा०—१ महौषधी.

मित्यर्थः । तां पार्वतीमुपदेशकाले प्राक्तनजन्मविद्याः । पूर्वजन्माभ्यस्तविद्या इत्यर्थः । शरदि गङ्गां हंसमाला इव नक्तं रात्रौ महौषधिं तृणविशेषमात्मभासः स्वदीप्तय इव प्रपेदिरे । उपमानसामर्थ्यादुपदेशमन्तरेणैवेति गम्यते ॥ ३० ॥

**असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।**
**कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥ ३१ ॥**

असंभृतमिति ॥ अथ सा पार्वती । अङ्गयष्टेरसंभृतमयत्नसिद्धं मण्डनं प्रसाधनमनासवाख्यमासवाख्यारहितं मदस्य करणं साधनं कामस्य पुष्पव्यतिरिक्तमस्त्रमस्त्रभूतं बाल्याच्छैशवात्परमनन्तरभावि वयो यौवनं प्रपेदे प्राप । यौवनेनैव हि युवतयः प्रसाध्यन्ते माद्यन्ते काम्यन्ते चेति भावः । अत्र द्वितीयपाद आसवरूपकारणाभावेऽपि तत्कार्यमदोक्तेर्विभावनालंकारः । तदुक्तम्— (अलं) 'कारणाभावे कार्योत्पत्तिर्विभावना' इति । प्रथमतृतीययोस्त्वारोप्यमाणयोर्मण्डनमदनास्त्रयोः प्रकृतोपयोगात्परिणामालंकारः । तल्लक्षणं तूक्तम् ॥ ३१ ॥

**उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् ।**
**बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन ॥ ३२ ॥**

उन्मीलितमिति ॥ नवयौवनेन प्रथमयौवनेन विभक्तमभिव्यञ्जितम् । स्तनजघनादिसंस्थानमित्यर्थः । तस्याः पार्वत्या वपुस्तूलिकया कूर्चिकया, शलाकयेत्यर्थः । 'तूलिका कथिता लेख्यकूर्चिका तूलशय्ययोः' इति विश्वः । उन्मीलितं रञ्जनद्रव्येणोद्भासितं समुत्कीर्णम्, रूपमिति यावत् । चित्रमालेख्यमिव । सूर्यांशुभिर्भिन्नं विकसितमरविन्दं पद्ममिव । चतस्रोऽस्रयो यस्य तच्चतुरस्रमन्यूनातिरिक्तं यथा तथा शोभत इति चतुरस्रशोभि । ताच्छील्ये णिनिः । बभूव । चित्रारविन्दयोस्तूलिकातरणिकिरणसंबन्ध इव स्वतःसिद्धस्यैवाङ्गसौष्ठवस्य यौवनप्रादुर्भावोऽभिव्यञ्जको बभूवेत्यर्थः ॥ ३२ ॥

देवतानां रूपं पादाङ्गुष्ठप्रभृति वर्ण्यते, मानुषाणां केशादारभ्येति धार्मिकाः । संप्रति सप्तदशभिः श्लोकैः पार्वत्याः पादादिकेशान्तवर्णनमारभते—

**अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ ।**
**आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ॥ ३३ ॥**

---

पाठा०—१ साधु. २ अत्युन्नता.

अभ्युन्नतेति ॥ अभ्युन्नतयोरङ्गुष्ठनखयोः प्रभाभिर्निमित्तेन निक्षेपणान्निर्भरन्यासाद्धेतोः रागमन्तर्गतं लौहित्यम् । 'रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिषु' इति शाश्वतः । उद्गिरन्तौ वमन्तौ, बहिर्निःसारयन्ताविव स्थिताविलर्थः । अत्रोद्गिरतेर्गौणार्थत्वान्न ग्राम्यतादोषः, प्रत्युत गुण एव । यथाह दण्डी (काव्या. १।९५)—'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥' इति । तस्याश्चरणौ तच्चरणौ । पृथिव्यामव्यवस्थां व्यवस्थारहिताम्, संचारिणीमित्यर्थः । स्थलारविन्दश्रियमाजहतुः । स्थलविशेषणान्नियतलौहित्यलाभः । अत्र सामुद्रिकाः—'यस्या रक्ततलौ पादावुन्नताग्रौ तलस्पृशौ । निगूढगुल्फौ निहतौ सा स्यान्नृपतिसंमता ॥' इति । अत्रोपमानधर्मस्यारविन्दश्रियश्चरणयोरुपमेययोरसंभवादरविन्दश्रियमिव श्रियमिति प्रतिबिम्बीकरणाक्षेपान्निदर्शनालंकारः । सा च संबन्धेऽसंबन्धलक्षणातिशयोक्त्यनुप्राणिता; अव्यवस्थाम्' इत्यनेन स्थलारविन्दस्य स्थैर्यसंबन्धेऽप्यसंबन्धाभिधानात् । निदर्शनालक्षणं तु—'असंद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना ॥' इति ॥ ३३ ॥

**सा राजहंसैरिव संनताङ्गी[1] गतेषु लीलाञ्चितविक्रमेषु[2] ।**
**व्यनीयत प्रत्युपदेशलुब्धै[3]रादित्सुभिर्नूपुरसिञ्जितानि ॥ ३४ ॥**

सेति ॥ प्रत्युपदेशलुब्धैः । 'गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थी नोपपद्यते ॥' इति न्यायादिति भावः । तदेव व्यनक्ति—नूपुरसिञ्जितान्यादित्सुभिरादातुमिच्छुभिः, मञ्जीरसिञ्जितमञ्जुकूजितोपदेशमिच्छद्भिरित्यर्थः । राजहंसैः । संनताङ्गी, कुचभारादिति भावः । सा पार्वती लीलाभिर्विलासैरञ्चिताः पूजिता विक्रमाः पादन्यासा येषु तेषु । 'अञ्चेः पूजायाम्' (पा. ७।२।५३) इतीडागमः । 'लीलाविलासक्रिययोः' इत्यमरः । गतेषु विषयेषु व्यनीयतेव विनीता किमु ? अन्यथा कथमस्या हंसगमनमित्युत्प्रेक्षा ॥ ३४ ॥

**वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये ।**
**शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ॥ ३५ ॥**

वृत्तेति ॥ वृत्ते वर्तुले पूर्वमनुगतेऽनुपूर्वे, गोपुच्छाकार इत्यर्थः । वृत्ते च

पाठा०—१ संनतांसा. २ विभ्रमेषु. ३ लब्धैः.

तेऽनुपूर्वे च वृत्तानुपूर्वे । नातिदीर्घे च । महाविभाषया न समासः । नञो विशेषणत्वं 'च'शब्दप्रयोगादेव ज्ञेयम् । शुभे मङ्गले । तस्या इमे तदीये जङ्घे प्रसृते । 'जङ्घा तु प्रसृता' इत्यमरः । सृष्टवतो निर्मितवतो विधातुः स्रष्टुः शेषाङ्गनिर्माणविधौ, जङ्घाव्यतिरिक्तावयवनिर्माणार्थमित्यर्थः । उत्पाद्ये पुनःसंपाद्ये लावण्ये कान्तिविशेषविषये । लावण्यलक्षणं तूक्तम् । यत्न आसेव बभूवेवेत्युत्प्रेक्षा । उपादानमन्तरेण कार्यस्य दुष्करत्वात्तदङ्गानां च लावण्योपादानकत्वात् पूर्वसंपादितस्य च जङ्घार्थमेव कार्त्स्न्येन विनियोगात्पुनर्लावण्यसंपादने यत्नः स्यादेवेत्येतादृक्सौन्दर्ये तज्जङ्घे इति भावः । आसेति बभूवार्थे 'तिङन्तप्रतिरूपकमव्ययम्' इत्याह शाकटायनः । वल्लभस्तु—"न तिङन्तप्रतिरूपकमव्ययम्, 'अस्तेर्भूः' (पा. २।४।५२) इति भ्वादेशनियमात्तादृक्तिङन्तस्यैवाभावात्, किंतु कवीनामयं प्रामादिकः प्रयोगः" इत्याह । वामनस्तु (काव्या. सू. ५।२।२७)—'अस गतिदीप्त्यादानेष्विति धातोर्लिटि रूपमिदम्' इत्याह । अस इत्यनुदात्तेत्(?) दीप्त्यर्थे । आस दिदीपे, प्रवृत्त इत्यर्थः ॥ ३५ ॥

**नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः ।**
**लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥३६॥**

नागेन्द्रेति ॥ नागेन्द्राणामैरावतादीनां हस्ताः करास्त्वचि चर्मणि कर्कशत्वात् कदलीविशेषा रामरम्भादय एकान्तशैत्यान्नियतशैत्याद्धेतोः लोके परिणाहि वैपुल्ययुक्तम् । 'परिणाहो विशालता' इत्यमरः । रूपं लब्ध्वापि । 'अपि'शब्दात् करिकदलीमात्रस्य तादृक्परिणाहो नास्तीति भावः । तस्या ऊर्वोस्तदूर्वोरुपमानबाह्या जाता उपमानक्रियानर्हा बभूवुः । तदूर्वोर्न कार्कश्यं नाप्येकान्तशैत्यमिति भावः ॥ ३६ ॥

**एतावता नन्वनुमेयशोभि[1] काञ्चीगुणस्थानमनिन्दितायाः ।**
**आरोपितं यद्गिरिशेन पश्चादनन्यनारीकमनीयमङ्कम् ॥ ३७ ॥**

एतावतेति ॥ अनिन्दिताया अनवद्यायाः पार्वत्याः काञ्चीगुणस्थानं नितम्बबिम्बम्, एतावता नन्वेतावतैव । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः । शोभत इति शोभि । आवश्यके णिनिः, ततस्त्वप्रत्ययः । अनुमेयं शोभित्वं शोभा यस्य तदनुमेयशोभि । 'त्वप्रत्ययस्तु गतार्थत्वान्न प्रयुक्तः' इत्याह वामनः । पश्चादादौ नैःस्पृह्येऽपि पश्चात्, तपश्चर्यानन्तरमित्यर्थः । गिरौ शेत इति गिरिशः

---

पाठा०—१ कान्ति.
२ कु० सं०

शिवः । 'गिरौ डश्छन्दसि' (वा० ४९९९) इति डप्रत्ययः । भाषायामपि क्वचिदिष्यते । अथवा,-गिरिः कैलासोऽस्यास्तीति गिरिशः । लोमादित्वाच्छप्रत्ययः । तेन गिरिशेन । अन्यासां नारीणां कमनीयः कामयितुं शक्यो न भवतीत्यनन्यनारीकमनीयस्तमङ्कं निजोत्सङ्गमारोपितमधिरोपितमिति यत् । एतावता लिङ्गेनेति पूर्वेणान्वयः । रोहतेर्ण्यन्तात्कर्मणि क्तः । 'रुहः पोऽन्यतरस्याम्' (पा. ७।३।४३) इति हकारस्य पकारः । गत्यर्थविवक्षायां द्विकर्मकत्वम् । प्रधाने कर्मणि क्तः । गिरिजानितम्बबिम्बं विश्वातिशायि सौन्दर्यं गिरिशाङ्कारूढत्वाद्व्यतिरेकेण नार्यन्तरनितम्बबिम्बवत् । विपक्षे हेत्वनुक्तिरेव बाधिका । दाक्षायणीनितम्बबिम्बस्य तु पक्षसपक्षयोरन्यतरभावानतिवृत्तेर्निष्कलङ्कमनुमानमित्यलमस्थानसंरम्भेण ॥ ३७॥

**तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी[1] नवलोमराजिः[2] ।**
**नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥ ३८ ॥[3]**

तस्या इति ॥ नीवीं वस्त्रग्रन्थिम् । 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः । अतिक्रम्यातीत्य नतं निम्नं नाभिरन्ध्रं प्रविष्टा प्रविशन्ती तन्वी सूक्ष्मा तस्याः पार्वत्या नवलोमराजिः सितेतरस्यासितस्य, इन्द्रनीलस्येत्यर्थः । तस्याः पार्वत्या मेखला तन्मेखला । 'तस्याः' इत्यनुवृत्तौ पुनस्तच्छब्दोपादानं वाक्यान्तरत्वात्सोढव्यम् । यद्वा,-तस्या नीव्या मेखला तन्मेखला, तत्र तदवस्थानात् । तस्या मध्यमणेरर्चिः प्रभेव रराज । 'ज्वालाभासोर्नपुंस्यर्चिः' इत्यमरः ॥ ३८ ॥

**मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला ।**
**आरोहणार्थं[4] नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ॥ ३९ ॥**

मध्येनेति ॥ 'वेदिः परिष्कृता भूमिः' इत्यमरः । वेदिविलग्नमध्या वेदिवत्

---

**पाठा०**—१ नीला. २ राजी. ३ गम्भीरनाभीह्रदसंनिधाने रराज नीला नवलोमराजिः । मुखेन्दुभीरुस्तनचक्रवाकचञ्चुच्युता शैवलमञ्जरीव ॥ (१ नाभि. २ भीतं. ) ४ नवयौवनस्य कामेन.

---

**टिप्प०**—1 मेखलामध्यवर्तिनो नायकमणेरर्चिरेव नीवीमतिक्रम्य नतनाभिरन्ध्रं प्रविष्टेवेत्यर्थः । अत्र वर्णसाम्यादिकमुत्प्रेक्षाहेतुः । नेयमुपमा, अर्चिषो नीव्यतिक्रमासंभवात्' इति नारायण० ।

कृशमध्या, तनुमध्येति यावत्। सा बाला पार्वती। मध्येन मध्यभागेन चारु सुन्दरं वलित्रयं कामस्यारोहणार्थं नवयौवनेन प्रयुक्तं रचितं सोपानमिव बभारेत्युत्प्रेक्षा ॥ ३९ ॥

**अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु[1] तथा प्रवृद्धम्[2] ।**
**मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ॥४०॥**

अन्योन्यमिति ॥ अन्योन्यं परस्परम्। 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये' (वा० ४७००) इति द्विरुक्तिः। '–समासवच्च बहुलम्' (वा० ४७००) इति बहुलवचनादसमासपक्षेऽपि पूर्वपदस्थस्य सुपः सुर्वक्तव्य इति तत्रत्यवार्तिकम्। उत्पीडयदुपरुन्धत्पाण्डु गौरमुत्पलाक्ष्याः स्तनद्वयं तथा तेन प्रकारेण प्रवृद्धम्। कर्तरि क्तः। श्याममुखस्य कृष्णचूचुकस्येति स्वरूपवर्णनम्। तस्य स्तनद्वयस्य मध्ये यथा येन प्रकारेण मृणालसूत्रान्तरं बिसतन्तुमात्रावकाशोऽप्यलभ्यं लब्धुमशक्यम्। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः। अत्र संबन्धेऽसंबन्धरूपातिशयोक्त्यलंकारः। कुचयोः पीवरत्वातिशयार्थमवकाशसंबन्धेऽप्यसंबन्धाभिधानादिति ॥ ४० ॥

लोके सुकुमारत्वमेव कुसुमास्त्रस्य साधकत्वमिति स्थिते सत्याह—

**शिरीषपुष्पाधिक[3]सौकुमार्यौ बाहू तदीयाविति मे वितर्कः[4] ।**
**पराजितेनापि कृतौ हरस्य यौ कण्ठपाशौ मकरध्वजेन ॥ ४१ ॥[5]**

शिरीषेति ॥ तस्या इमौ तदीयौ बाहू शिरीषपुष्पादधिकं सौकुमार्यं मार्दवं ययोस्तथोक्ताविति मे वितर्क ऊहः। कुतः? यौ बाहू पराजितेनापि पूर्वं निर्जितेनापि मकरध्वजेन कामेन हरस्य कण्ठपाशौ कण्ठबन्धनरज्जू कृतौ, कण्ठालिङ्गनं प्रापिताविल्यर्थः। तदसाध्यसाधनात्तत आधिक्यमिति भावः। अत्र बाह्वोरारोपितकण्ठपाशत्वस्य प्रकृतवैरनिर्यातनोपयोगात् परिणामालंकारः ॥ ४१ ॥

---

**पाठा०**—१ चारु. २ विवृद्धम्. ३ मालाधिक. ४ प्रतर्कः ५ निर्भर्त्सिताशोकदलप्रसूति पाणिद्वयं चारुनखं तदीयम्। नवोदितेन्दुप्रतिमस्य शोभां व्योम्नः प्रदोषे विफलीचकार ॥

---

**टिप्प०**—1 यो मकरध्वजः पूर्वं दर्पाद्देवमासाद्य विफलीकृतसुकुमारतरपूर्वोपकरणो जातः, स एव याभ्यां पशुमिव रज्ज्वा कण्ठे निबध्यात्मविधेयं चकार, तयोः सौकुमार्यं कथं शिरीषकुसुमादिभिरुपमातुं शक्यम्। अत्र व्यतिरेकोऽलंकारः' इति **नारायण०**।

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥ ४२ ॥

कण्ठस्येति ॥ स्तनाभ्यां बन्धुरस्योन्नतस्य तस्याः पार्वत्याः कण्ठस्य गलस्य निस्तलस्य वर्तुलस्य मुक्ताकलापस्य मुक्ताभूषणस्य च । 'वर्तुलं निस्तलं वृत्तं बन्धुरं तून्नतानतम्' । 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इति चामरः । अन्योन्यशोभाजननाद्भूषणभूष्यभावोऽलंकारालंकार्यभावः साधारणः समानो बभूव, उभावप्यन्योन्यस्य भूष्यौ भूषणे च बभूवतुरित्यर्थः । अत्र कण्ठमुक्ताकलापयोः शोभाक्रियाद्वारेणान्योन्यभूषाजनकत्वादन्योन्यालंकारः । तदुक्तम् (अलं. स.)—'परस्परं क्रियाजननमन्योन्यम्' इति ॥ ४२ ॥

इदानीं पार्वतीवदनं चन्द्रकमलसदृशमित्येतदेव वक्रोभङ्ग्याह—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ ४३ ॥

चन्द्रमिति ॥ लोला चपला, परिभ्रमणशीलेत्यर्थः । लक्ष्मीः कान्त्यभिमानिनी देवता चन्द्रं गता प्राप्ता सती पद्मगुणान्सौगन्ध्यादीन्न भुङ्क्ते नानुभवति । पद्माश्रिता सती चन्द्रमस इमां चान्द्रमसीमभिख्यां शोभाम् । 'अभिख्या नाम शोभयोः' इत्यमरः । अमृतवदानन्दिनीं न भुङ्क्ते; उमामुखं प्रतिपद्य तु द्वे चन्द्रपद्मे संश्रयः कारणं यस्यास्तां द्विसंश्रयां प्रीतिमानन्दमवाप, तत्रोभयगुणसंभवादिति भावः । अत्रोपमानभूतचन्द्रपद्मापेक्षयोपमेयस्योमामुखस्याधिकगुणवत्त्वोक्त्या व्यतिरेकालंकारः । तदुक्तम् (अलं. स.)—'भेदप्राधान्येनोपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः' इति ॥ ४३ ॥

पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठ[1]पर्यस्तरुचः स्मितस्य ॥ ४४ ॥

पुष्पमिति ॥ पुष्पं पुण्डरीकादिकं प्रवाले बालपल्लवे उपहितं निहितं स्याद्यदि, 'प्रवालो वल्लकीदण्डे विद्रुमे बालपल्लवे' इति विश्वः । मुक्ताफलं वा स्फुटे निर्मले विद्रुमे तिष्ठतीति स्फुटविद्रुमस्थं स्याद्यदि ततस्तर्हि विशदस्य शुभ्रस्य ताम्रे अरुणे ओष्ठे पर्यस्ता प्रसृता रुक्कान्तिर्यस्य तथोक्तस्य तस्याः पार्वत्याः

पाठा०—१ ताम्रोष्ठ.

स्मितस्यानुकुर्यात्, स्मितमनुकुर्यादित्यर्थः। अत्र 'माषाणामश्नीयात्' इतिवत्संबन्धमात्रविवक्षया षष्ठी। अत्र पुष्पप्रवालयोर्मुक्ताविद्रुमयोश्चासंबन्धेऽपि संबन्धोक्त्यातिशयोक्तिः। सा च 'संभावना' इत्यलंकारसर्वस्वकारः। विशेषतस्तु पुष्पमुक्ताफलयोरुपमानयोः प्रकृतोत्कर्षार्थमुपमेयताकल्पनात्प्रतीपालंकारः। तदुक्तम् (अलं. स.)—'उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपः' इति लक्षणात्। स च पूर्वोक्तातिशयोक्त्यनुप्राणित इति ॥ ४४ ॥

**स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि।**
**अप्यन्यपुष्टा[1] प्रतिकूलशब्दा[2] श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥४५॥[3]**

**स्वरेणेति** ॥ अभिजातवाचि मधुरभाषिण्यां तस्यां पार्वत्याममृतस्रुतामृतस्राविणेव। क्विप्। स्वरेण नादेन प्रजल्पितायामालपन्त्याम्। कर्तरि क्तः। अन्यैः काकादिभिः पुष्टाऽन्यपुष्टा कोकिलापि। मुख्यया वृत्त्या जातिवचनत्वाभावान्ङीबभावः। ताड्यमाना वाद्यमाना विषमबद्धा तन्त्रीर्वितन्त्रीरिव। 'अवितृस्तृतन्त्रिभ्य ईः' (उ० ४३८) इति तन्त्रिधातोरौणादिक ईप्रत्ययः। ङीबभावान्न 'हल्ङ्याब्भ्यः—' (पा.६।१।६८) इति सुलोपः। तदुक्तम्—'अवीलक्ष्मीतरीतन्त्रीधीह्रीश्रीणामुणादिषु। स्त्रीलिङ्गानाममीषां तु न सुलोपः कदाचन ॥' इति। एते ङीबन्ता न भवन्तीत्यर्थः। श्रोतुर्जनस्य प्रतिकूलशब्दाः कर्णकठोरनादा भवन्तीति शेषः ॥ ४५ ॥

**प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या।**
**तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥४६॥**

**प्रवातेति** ॥ प्रवाते प्रभूतवातस्थले यन्नीलोत्पलं ततो निर्विशेषं निर्भेदम्,

---

**पाठा०**—१ अन्यपुष्टाः. २ शब्दाः. ३ कर्णद्वयस्थं नगराजपुत्र्यास्ताटङ्कयुग्मं [1]सुतरां रराज। [2]मत्वा भवित्रीं त्रिपुरारिपत्नीं [3]तां सेवमानाविव पुष्पवन्तौ ॥ (१ नितरां बभास. २ ज्ञात्वा. ३ सेवासमेतौ.)

---

**टिप्प०**—1 'अत्र यदि-शब्दबलादसिद्धार्थस्य कल्पनात् "यद्यर्थोक्तौ च कल्पनम्" इत्युक्तोऽतिशयालंकारः' इति **नारायण०**। 2 'अत्र "अमृतस्रुतेव" इत्युत्प्रेक्षा माधुर्यसौकुमार्यादिगुणैः परभृताविरुताद्देवीसंजल्पितस्य व्यतिरेकं द्योतयति। "प्रतिकूल"शब्दश्च तमभिद्योतयतीति व्यतिरेकालंकारो ध्वन्यते' इति **नारायण०**।

तरलदृशामित्यर्थः । अधीरविप्रेक्षितं चकितविलोकितम् । आयताक्ष्या विशालनेत्रया तया पार्वत्या मृगाङ्गनाभ्यो हरिणीभ्यो गृहीतमभ्यस्तं नु ? अथवा मृगाङ्गनाभिस्ततस्तस्याः पार्वत्याः । पञ्चम्यास्तसिल् । गृहीतं नु ? अत्र विवक्षितस्य परस्परग्रहणस्योत्प्रेक्षणादुत्प्रेक्षेति केचित् । तदुपजीविसंदेहालंकार इत्यन्ये । उभयोः संकर इत्यपरे ॥ ४६ ॥

**तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरायतलेखयोर्या ।**
**तां वीक्ष्य लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥४७॥**

**तस्या इति** ॥ आयतलेखयोर्दीर्घरेखयोस्तस्याः पार्वत्या भ्रुवोः संबन्धिनी शलाकयाञ्जनेन निर्मितेव स्थिता या कान्तिर्लीलाचतुरां विलाससुभगां तां कान्तिं वीक्ष्यानङ्गः स्वचापसौन्दर्येण यो मदस्तं मुमोच । इह सौन्दर्यातिशयोक्तिः ॥४७॥

**लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्याः ।**
**तं केशपाशं प्रसमीक्ष्य कुर्युर्बालप्रियत्वं शिथिलं चमर्यः ॥ ४८ ॥**

**लज्जेति** ॥ तिरश्चां तिर्यग्जातीनां चेतसि लज्जा स्याद्यदि । संशयाभावोऽसंशयम्, संदेहो नास्तीत्यर्थः । पर्वतराजपुत्र्याः । 'शार्ङ्गरवाद्यञो ङीन्' (पा. ४।१।७३) इति ङीन् । तं प्रसिद्धं केशपाशं केशवकलापम् । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । प्रसमीक्ष्य दृष्ट्वा चमर्यो मृगीविशेषा बालाः प्रिया यासामिति विग्रहे बालप्रियास्तासां भावो बालप्रियत्वम्, प्रियबालत्वमित्यर्थः । आहिताग्न्यादिपाठाद्वा परनिपातः । 'त्वतलोर्गुणवचनस्य' (वा० ३९२७) इति पुंवद्भावः । शिथिलं कुर्युः, निर्लज्जत्वान्न शिथिलयन्तीत्यर्थः । अत एवात्र निर्लज्जत्वकरणहेतोराद्यपादे वाक्यार्थत्वेनोक्त्या काव्यलिङ्गाख्योऽलंकारः । तदुक्तम्— 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति ॥ ४८ ॥

**सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन ।**
**सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥ ४९ ॥**

**सर्वोपमेति** ॥ किंबहुना सा पार्वती विश्वसृजा विधात्रा । एकत्र तिष्ठती-

---

**पाठा०**—१ लोलाम्. २ ताटङ्कपत्रं विरराज तस्याः शैलात्मजायाः श्रवणद्वयस्थम् । मत्वा भवित्रीं मदनारिपत्नीं सेवासमेताविव पुष्पवन्तौ ॥ ( १ युग्मम्. २ पुष्पदन्तौ. )

त्येकस्थं, तस्य सौन्दर्यस्य सर्ववस्तुगतस्येत्यर्थः । दिदृक्षयेव प्रयत्नाद्यथाप्रदेशं क्रमाद्विनिवेशितेन स्थापितेन सर्वेषामुपमाद्रव्याणां चन्द्रारविन्दाद्युपमानवस्तूनां समुच्चयेन समाहारेण निर्मिता । 'दिदृक्षयेव' इति फलोत्प्रेक्षा दर्शनार्थित्वाद्विश्वसृज इति ॥ ४९ ॥

**तां नारदः कामचरः कदाचित् कन्यां किल प्रेक्ष्य पितुः समीपे ।**
**समादिदेशैकवधूं भवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ॥ ५० ॥**

तामिति ॥ कामेनेच्छया चरतीति कामचरो नारदः । कदाचित्पितुर्हिमवतः समीपे कन्यां तां पार्वतीं प्रेक्ष्य किल, प्रेम्णा न त्वन्यथा, हरस्य शिवस्यार्धं हरतीत्यर्धहरा । 'हरतेरनुद्यमनेऽच्' (पा.३।२।९) इत्यच्प्रत्ययः । शरीरस्यार्धहरां शरीरार्धहराम् । कुलधुरंधरादिवदवयवद्वारा समुदायविशेषकत्वात्समासः । अन्यथा त्वर्धस्य समप्रविभागवचनत्वात् 'अर्धं नपुंसकम्' (पा. २।२।२) इत्यशरीरेति स्यात् । एकवधूमसपत्नीकां भार्याम् । 'पूर्वकाल-' (पा. २।१।४९) इत्यादिना समासः । भवित्रीं भाविनीं समादिदेश, हरस्यार्धाङ्गहारिण्येकपत्नी भविष्यतीत्यादिष्टवानित्यर्थः ॥ ५० ॥

**गुरुः प्रगल्भेऽपि वयस्यतोऽस्यास्तस्थौ निवृत्तान्यवराभिलाषः ।**
**ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ॥ ५१ ॥**

गुरुरिति ॥ गुरुः पिता । 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः । अतो नारदवचनाद्धेतोरस्याः पार्वत्याः प्रगल्भे वयस्यपि यौवने सत्यपि निवृत्तोऽन्यस्मिन्वरे जामातर्यभिलाषो यस्य स तथोक्तः सन् । 'वरो ना रूपजामात्रोः' इति वैजयन्ती । तस्थौ, वरान्तरं नान्विष्टवानित्यर्थः । ननु कुतोऽसौ निर्बन्ध इत्यत आह—ऋत इति । तथा हि—मन्त्रैः पूतं संस्कृतं हूयत इति हव्यमाज्यादिकं कृशानोः पावकादृते कृशानुं विना । 'अन्यारादितरर्ते-' (पा.२।३।२९) इत्यादिना पञ्चमी । अपराणि तेजांसि सुवर्णादीनि नार्हन्ति, न भजन्तीत्यर्थः । ईश्वरादन्यस्य तद्योग्यस्याभावादुपेक्षेति भावः ॥ ५१ ॥

तर्हि तमेवाहूय दीयतामित्याशङ्क्याह—

**अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक ।**
**अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥ ५२ ॥**

---

पाठा०—१ एकवधूः. २ अन्यतर.

अयाचितारमिति ॥ अद्रिर्हिमवालयाचितारमयाचमानं देवदेवं महादेवं सुतां पार्वतीं ग्राहयितुं स्वयमाहूय परिग्राहयितुं[1] न शशाक नोत्सेहे। तथा हि—साधुः सज्जनः। 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्वः। अभ्यर्थनाभङ्गभयेन याञ्चावैफल्यभीत्येष्टेऽप्यर्थे विषये माध्यस्थ्यमौदासीन्यमवलम्बते ॥ ५२ ॥

न च तथैव स्थितः किं तूपायान्तरं चिन्तितवानिति वक्तुं प्रस्तौति—

यदैव पूर्वे जनने शरीरं सा दक्षरोषात्सुदती ससर्ज[1]।
तदाप्रभृत्येव[2] विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत् ॥ ५३ ॥

यदेति ॥ शोभना दन्ता यस्याः सा सुदती। 'वयसि दन्तस्य दतृ' (पा.५।४।१४१) इति दत्रादेशः। 'उगितश्च' (पा.४।१।६) इति ङीप्। सा पार्वती पूर्वे जनने पूर्वस्मिञ्जन्मनि। 'पूर्वादिभ्यो नवभ्यो वा' (पा. ७।१।१६) इति स्मिन्नादेशाविकल्पः। 'पूर्वं ज्वलने' इति पाठे पूर्वं दाक्षायणीत्वे ज्वलने योगाग्नौ। यदा यस्मिन्काले दक्षरोषाच्छरीरं देहं ससर्ज तत्याज, तदाप्रभृत्येव तदाद्येव यथा तथा पशूनां पतिः शिवो विमुक्तसङ्गस्त्यक्तविषयासङ्गः सन्, अपरिग्रहोऽपत्नीकोऽभूत् स्त्र्यन्तरं न परिजग्राहेत्यर्थः। 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः ॥ ५३ ॥

स कृत्तिवासास्तपसे यतात्मा[3] गङ्गाप्रवाहोक्षितदेवदारु।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किंचित्क्वणत्किंनरमध्युवास ॥ ५४ ॥

स इति ॥ कृत्तिवासाश्चर्माम्बरः। 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः। यतात्मा नियतचित्तः स पशुपतिस्तपसे तपोर्थं गङ्गाप्रवाहेणोक्षिताः सिक्ता देवदारवो यस्मिंस्तत्तथोक्तम्। मृगनाभिगन्धि कस्तूरीगन्धवत्, कस्तूरीमृगसंचारादिति भावः। 'मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम्' इत्यमरः।

---

पाठा०—१ स्वयमुत्ससर्ज. २ ततःप्रभृति. ३ जितात्मा.

टिप्प०—1 'अत्र "गतिबुद्धि—" (पा.१।४।५२) इत्यादिसूत्रे ग्रहेरनुपादानादेव प्रतिग्राहयितुमिति द्वितीयानुपपत्तेः प्राप्त्यर्थत्वमेव युक्तम्। तत्तु प्रत्युपसर्गादिति दक्षिणावर्तः। नाथस्तु निरुपसर्गस्यापि ग्रहेः प्राप्त्यर्थत्वमुक्तवान्' इति नारायण०।

क्वणन्तो गायन्तः किंनरा यस्मिंस्तत्तथोक्तम् । किंचित्किमपि हिमाद्रेः प्रस्थं सानुमध्युवास, कुत्रचित्प्रस्थ उवासेत्यर्थः । 'उपान्वध्याङ्वसः' (पा. १।४।४८) इत्याधारस्य कर्मत्वम् । 'प्रस्थोऽस्त्री सानुमानयोः' इत्यमरः ॥ ५४ ॥

**गणा नमेरुप्रसवावतंसा भूर्जत्वचः स्पर्शवतीर्दधानाः ।**
**मनःशिलाविच्छुरिता निषेदुः शैलेयनद्धेषु शिलातलेषु ॥ ५५ ॥**

**गणा इति ॥** गणाः प्रमथगणाः । 'गणाः प्रमथसंख्यौघाः' इति वैजयन्ती । नमेरुप्रसवावतंसाः सुरपुंनागकुसुमशेखराः । 'नमेरुः सुरपुंनागः' इति विश्वः । स्पर्शवतीः सुखस्पर्शाः, मृद्वीरित्यर्थः । प्रशंसायां मतुप् । भूर्जत्वचो भूर्जवल्कलानि दधानाः, वसाना[1] इत्यर्थः । मनःशिलाभिर्धातुविशेषैर्विच्छुरिता अनुलिप्ताश्च सन्तः । शिलायां भवं शैलेयम् । गन्धौषधिविशेषः । शिलायाः 'ढञ्छ्यो ढक्' (पा. ४।१।१२०) इति भवार्थे ढक् । 'शिलाजतु च शैलेयम्' इति यादवः । तेन नद्धेषु व्याप्तेषु शिलातलेषु निषेदुः, उपविविशुरित्यर्थः ॥ ५५ ॥

**तुषारसंघातशिलाः खुराग्रैः समुल्लिखन्दर्पकलः ककुद्मान् ।**
**दृष्टः कथंचिद्गवयैर्विविग्नैरसोढसिंहध्वनिरुन्ननाद ॥ ५६ ॥**

**तुषारेति ॥** तुषारसंघाता हिमघनास्त एव शिलास्ताः खुराग्रैः समुल्लिखन्विदारयन्दर्पेण कलो मधुरध्वनिर्यस्य स दर्पकलो विविग्नैर्भीतैर्गवयैर्गोसदृशमृगविशेषैः कथंचित्कृच्छ्रेण दृष्टः । ककुदमस्यास्तीति ककुद्मान्वृषभोऽसोढः सिंहानां ध्वनिर्येन स सिंहध्वनिमसहमानः सन् । उन्ननादोच्चैर्ननाद, जगर्जेत्यर्थः । स्वभावोक्तिरलंकारः । तदुक्तम्—'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' इति ॥ ५६ ॥

---

**पाठा०**—1 वसानाः.

---

**टिप्प०**—1 'रमणीयवस्तुसंनिधानेऽपि समाधिभङ्गशंका नाभूदिति द्योत्यते । उक्तं च शाकुन्तले ( ७।१२ ) 'प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया । ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तास्मिंस्तपस्यन्त्यमी ॥' इति **नारायण०** ।

तत्राग्निमाधाय समित्समिद्धं स्वमेव मूर्त्यन्तरमष्टमूर्तिः ।
स्वयं विधाता तपसः फलानां केनापि कामेन तपश्चचार ॥ ५७ ॥

तत्रेति ॥ तपसः फलानामिन्द्रत्वादीनां स्वयं विधाता जनयिता, दातेत्यर्थः । अष्टौ मूर्तयो यस्य सोऽष्टमूर्तिरीश्वरः । 'भूतार्कचन्द्रयज्वानो मूर्तयोऽष्टौ प्रकीर्तिताः' इति । तत्र प्रस्थे स्वं स्वकीयमेव मूर्त्यन्तरं मूर्तिभेदं समिद्भिः समिद्धं दीपितमग्निमाधाय प्रतिष्ठाप्य केनापि कामेन कयापि फलकामनया तपश्चचार चक्रे । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात्कामेनेत्युक्तम् । तस्यावाप्तसमस्तकामत्वात्केनापीत्युक्तम् ॥ ५७ ॥

अनर्घ्यमर्घ्येण तमद्रिनाथः स्वर्गौकसामर्चितमर्चयित्वा ।
आराधनायास्य सखीसमेतां समादिदेश प्रयतां तनूजाम् ॥ ५८ ॥

अनर्घ्यमिति ॥ अद्रीणां नाथोऽद्रिनाथो हिमवान्, अर्घं मूल्यमर्हतीत्यर्घ्यः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । 'दण्डादिभ्यो यः' (पा. ५।१।६६) इति यप्रत्ययः । अर्घ्यो न भवतीत्यनर्घ्यस्तमनर्घ्यम्, अमूल्यमित्यर्थः । स्वर्ग ओकः स्थानं येषां तेषां स्वर्गौकसां देवानामर्चितम् । देवैः पूज्यमानमित्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्च' (पा. ३।२।१८८) इति वर्तमाने क्तः । 'क्तस्य च वर्तमाने' (पा. २।३।६७) इति षष्ठी । तमीश्वरमर्घ्येण पूजार्थोदकेन । 'पादार्घाभ्यां च' (पा. ५।४।२५) इति यत्प्रत्ययः । 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः । अर्चयित्वा पूजयित्वास्येश्वरस्याराधनाय सखीभ्यां जयाविजयाभ्यां समेतां प्रयतां नियतां तनूजां सुतां समादिदेशाज्ञापयामास ॥ ५८ ॥

प्रत्यर्थिभूतामपि तां समाधेः शुश्रूषमाणां गिरिशोऽनुमेने ।
विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ॥ ५९ ॥

प्रत्यर्थीति ॥ गिरिशः शिवः समाधेः प्रत्यर्थिभूतां प्रतिपक्षभूतामपि । सुप्सुपेति

---

पाठा०—१ अथ. २ समृद्धम्.

टिप्प०—1 कालिदासकृतमष्टमूर्तिवर्णनं यथा शाकुन्तले ( १।१ )—'या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् । यामाहुः सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः' इति ।

समासः । श्रोतुमिच्छन्तीं शुश्रूषमाणां सेवमानाम् । सेवका हि सेव्ये दत्तकर्णा भवन्ति । इच्छार्थे सन्प्रत्ययः । 'ज्ञाश्रुस्मृदृशां सनः' (पा. १।३।५७) इत्यात्मनेपदम् । तां पार्वतीमनुमेनेऽङ्गीचकार, न प्रतिषिद्धवानित्यभिप्रायः । न चैतावता धीरस्य कश्चिद्विकार इत्याशयः । धीरत्वमेवार्थान्तरन्यासेनाह—विकारेति । विकारस्य प्रकृतेरन्यथात्वस्य हेतौ स्त्रीसंनिधानादिकारणे सति विद्यमानेऽपि येषां चेतांसि न विक्रियन्ते न विकृतिं नीयन्ते, त एव धीराः । विक्रियन्ते इति कर्मणि लट् ॥ ५९ ॥

शुश्रूषाप्रकारमेवाह—

अवचितबलिपुष्पा वेदिसंमार्गदक्षा
नियमविधिजलानां बर्हिषां चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥ ६० ॥

अवचितेति ॥ सुकेशी शोभनमूर्धजा । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' (पा.४।१।५४) इति ङीष् । सा पार्वती । अवचितानि लूनानि बलिपुष्पाणि पूजाकुसुमानि यया सा । वेदेर्नियमवेदिकायाः संमार्गे संमार्जने दक्षा । नियमविधेर्नित्यकर्मानुष्ठानस्य यानि जलानि तेषां बर्हिषां कुशानां चोपनेत्र्यानेत्री सती । तस्य गिरिशस्य शिरसि चन्द्रस्य पादैः रश्मिभिः । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । नियमितपरिखेदा निवर्तितपरिश्रमा सती । अहन्यहनि प्रत्यहम् । 'अव्ययं विभक्तिसमीपसमृद्धि–' (पा.२।१।६) इत्यादिना नियतार्थेऽव्ययीभावः । 'नपुंसकादन्यतरस्याम्' (पा.५।४।१०९) इति टच्प्रत्ययः । गिरिशमुपचचार शुश्रूषांचक्रे ॥ ६० ॥

इति श्रीमन्महोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्य उमोत्पत्तिर्नाम प्रथमः सर्गः ।

---

# द्वितीयः सर्गः

तस्मिन्विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाहं पुरोधाय धाम स्वायंभुवं ययुः ॥ १ ॥

तस्मिन्निति ॥ तस्मिन्काले पार्वतीशुश्रूषाकाले तारकेण तारकनाम्ना वज्रणखपुत्रेण केनचिदसुरेण विप्रकृता उपद्रुताः । दिवमोकः स्थानं येषां ते दिवौकसो देवाः । 'दिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः । द्यौरोक इति पक्षे पृषोदरादित्वात्साधुः । तुरं त्वरितं साहयत्यभिभवतीति तुराषाट् । साहयतेश्चौरादिकात्क्विप् । 'नहिवृतिवृषि–' (पा.६।३।११६) इत्यादिना पूर्वपदस्य दीर्घः । प्रकृतिग्रहणे प्रातिपदिकस्यापि ग्रहणात् । मुग्धबोधकारस्तु तुराशब्दष्टाबन्त इत्याचष्टे । तं तुरासाहं देवेन्द्रम् । अजादिषु साङ्रूपत्वाभावात् 'सहेः साडः सः' (पा.८।३।५६) इति षत्वं न भवति । पुरोधाय पुरस्कृत्य । स्वयंभुवो ब्रह्मण इदं स्वायंभुवम् । संज्ञापूर्वकविधेरनित्यत्वात् 'ओर्गुणः' (पा.६।४।१४६) इति गुणो न । धाम स्थानं ययुः, ब्रह्मलोकं जग्मुरित्यर्थः ॥ १ ॥

तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम् ।
सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥ २ ॥

तेषामिति ॥ परिम्लाना परिक्षीणा मुखश्रीर्मुखकान्तिर्येषां तथोक्तानां तेषां देवानां ब्रह्मा । सुप्तपद्मानां मुकुलितारविन्दानां सरसां प्रातर्दीधितिमान्सूर्य इवाविरभूत्, प्रकाशोऽभूदित्यर्थः । 'प्रकाशे प्रादुराविः स्यात्' इत्यमरः । सूर्योपमानेन तेषां म्लानिहरत्वं सूचितम् । अत्रोपमालंकारः । तल्लक्षणं तु—'स्वतः सिद्धेन भिन्नेन संमतेन च धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यं चैकपदोपमा ॥' इति ॥ २ ॥

अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम् ।
वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥ ३ ॥

अथेति ॥ अथाविर्भावानन्तरं सर्वे ते देवाः सर्वतः समन्ततो मुखानि यस्य तं सर्वतोमुखम्, चतुर्मुखमित्यर्थः । वाचां विद्यानामीशं वागीशं सर्वस्य जगतो धातारं स्रष्टारं ब्रह्माणं प्रणिपत्य नमस्कृत्य । अर्थादनपेताभिरर्थ्याभिः,

अर्थयुक्ताभिरित्यर्थः। 'धर्मपथ्यर्थन्यायादनपेते' (पा. ४।४।९२) इति यत्प्रत्ययः। वाग्भिरुपतस्थिरे, तुष्टुवुरित्यर्थः। 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वक्तव्यम्' (वा० ९१४) इत्यात्मनेपदम् ॥ ३ ॥

स्तुतिप्रकारमाह 'नमः' इत्यादिभिर्द्वादशभिः श्लोकैः—

**नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने ।**
**गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ ४ ॥**

नम इति ॥ 'हे भगवन्' इत्यध्याहार्य व्याख्येयम्। सृष्टेः प्राक्। 'अन्यारात्–' (पा. २।३।२९) इत्यादिनाऽञ्चूत्तरपदयोगे पञ्चमी। केवलात्मने एकरूपाय। 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐत० १।१) इति श्रुतेः। 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः' इत्यमरः। पश्चात्सृष्टिप्रवृत्तिकाले। विभज्यतेऽनेनेति विभागः। गुणानां सत्त्वादीनां त्रयमेव विभागो यस्य तस्मै। 'गुणाः सत्त्वं रजस्तमः' इत्यमरः। भेदमुपाधिम्, स्रष्टृत्वादिकमित्यर्थः। उपेयुषे प्राप्तवते। 'उपेयिवाननाश्वाननूचानश्च' (पा. ३।२।१०९) इति निपातः। अत एव त्रिमूर्तये ब्रह्मविष्णुरुद्ररूपिणे तुभ्यं नमः। 'नमःस्वस्ति–' (पा. २।३।१६) इत्यादिना चतुर्थी। उक्तं च—'नमो रजोजुषे सृष्टौ स्थितौ सत्त्वमयाय च। तमोरूपाय संहारे त्रिरूपाय स्वयंभुवे ॥' इति ॥ ४ ॥

**यदमोघमपामन्तरुप्तं बीजमज ! त्वया ।**
**अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ॥ ५ ॥**

यदिति ॥ न जायत इत्यजः, हे अज ! अपां जलानामन्तस्त्वया यद्-मोघमवन्ध्यं बीजं वीर्यमुप्तं निक्षिप्तम्। 'मुक्तम्' इति पाठे विसृष्टमित्यर्थः। 'शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च' इत्यमरः। अतस्ते बीजाच्चराचरं स्थावरजंगमात्मकम्। समाहारे द्वन्द्वैकवद्भावः। विश्वं जगत्, उत्पन्नमिति शेषः। तस्य विश्वस्य। प्रभवत्यस्मादिति प्रभवः कारणं गीयसे। 'अदश्चराचरं विश्वं प्रभवस्तस्य गीयते' इति पाठे अद इदं चराचरं विश्वं तस्य बीजस्य प्रभवो गीयते, लोके इति शेषः। अत्र मनुः (१।८–९)—'अप एव ससर्जादौ तासु वीर्यमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥' इति ॥ ५ ॥

**तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।**
**प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥ ६ ॥**

तिसृभिरिति ॥ एकः सृष्टेः प्राक्केवलस्त्वं तिसृभिरवस्थाभिस्त्रैगुण्यमयीभि-

हरिहरब्रह्मस्वरूपाभिर्महिमानं निजशक्तिमुदीरयन्विजृम्भयन् प्रलयस्थितिसर्गाणामन्तस्थित्युत्पत्तीनां कारणतां गतः। इदं 'पश्चाद्भेदमुपेयुषे' (२।४) इत्यस्य विवरणमतो न गतार्थत्वदोषः ॥ ६ ॥

भूतसृष्टिकर्तृत्वमुक्त्वा मिथुनसृष्ट्यर्थं मूर्तिमतो ब्रह्मणो भेदमाह—

स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया ।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥ ७ ॥

स्त्रीपुंसाविति ॥ स्त्री च पुमांश्च स्त्रीपुंसौ। 'अचतुर–' (पा.५।४।७७) इत्यादिनाऽच्प्रत्ययान्तो निपातः। सिसृक्षया स्रष्टुमिच्छया भिन्नमूर्तेर्द्विधाकृतविग्रहस्य ते तवात्मनो देहस्य भागावात्मभागौ। 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इति विश्वः। तावेव भागौ प्रसूतिभाज उत्पत्तिभाजः। सृज्यत इति सर्गस्तस्य, निजसृष्टेरित्यर्थः। माता च पिता च पितरौ। 'पिता मात्रा' (पा.१।२।७०) इत्येकशेषः। स्मृतौ। वृद्धैरिति शेषः अत्र मनुः (१।३२)—'द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत्। अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः॥' इति ॥ ७ ॥

स्वकालपरिमाणेन व्यस्तरात्रिंदिवस्य ते ।
यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥ ८ ॥

स्वकालेति ॥ स्वकालस्य परिमाणेन 'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते' इत्युक्तरूपेण व्यस्तं विभक्तं रात्रिंदिवं रात्र्यहनी यस्य तस्य। यद्यपि 'अचतुर–' (पा.५।४।७७) इत्यादिसूत्रेण रात्रौ च दिवा च रात्रिंदिवमिति सप्तम्यर्थे वृत्तौ द्वन्द्व इत्युक्तं तथापि 'दोषामन्यमहः, दिवामन्या रात्रिः' इत्यादौ कर्मवदत्रापि प्रातिपदिकार्थवृत्तित्वं कथंचित्प्रयोगबलादाश्रयणीयम्। ते तव यौ तु स्वप्नावबोधौ तावेव भूतानां प्रलयोदयौ संहारसृष्टी। यदाहुः (मनु. १।५२)—'यदा स देवो जागर्ति तदैव चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते॥' इति। एतच्च दैनंदिनसृष्टिप्रलयाभिप्रायकं, महाप्रलयस्य ब्रह्मणो वर्षशतान्ते भावित्वात् ॥ ८ ॥

---

पाठा०—१ भावौ. २ परिणामेन. ३ यौ स्वप्नबोधौ तावेव; स्वप्नावबोधौ भूतानां तावेव.

**जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।**
**जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥ ९ ॥**

**जगदिति** ॥ हे भगवन् ! त्वं जगद्योनिर्जगत्कारणं स्वयमयोनिरनादित्वादकारणकस्त्वम् । अन्तयतीत्यन्तः । पचाद्यच् । जगतोऽन्तर्जगत्संहर्ता स्वयं निरन्तको नित्यत्वादन्तरहितः । त्वं जगतामादिर्जगदादिः, सृष्टेः प्रागपि सन्नित्यर्थः । अत एव त्वमनादिरादिरहितः । जगतामीशो नियन्ता स्वयं निरीश्वरः, अनियम्य इत्यर्थः । 'यतो वा इमानि भूतानि जायन्ते' (तैत्ति० ३।१।१) इत्यादिश्रुतिरेवात्र प्रमाणम् । अत्र 'अयोनिः' इत्यादौ नञ्तत्पुरुषाश्रयणे विरोधः, बहुव्रीहिणा तु तत्परिहार इति विरोधाभासालंकारः । यथाहुः—'विरोधाभासत्वे विरोधः' इति ॥ ९ ॥

तव तु न प्रपञ्चस्येव जन्मतिरोधानज्ञानेषु परापेक्षेत्याह—

**आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।**
**आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ १० ॥**

**आत्मानमिति** ॥ हे भगवन् ! त्वमात्मानं लोकानुग्रहार्थं ब्रह्मरूपेणोत्पिपादयिषितं स्वस्वरूपमात्मनैव वेत्सि जानासि । सर्वापि क्रिया कर्तव्यार्थज्ञानपूर्विकेति भावः । तथात्मानमात्मनैव । आत्मन्येवेत्यत्रापि संबध्यते । स्वस्मिन्नेव सृजसि, अधिष्ठानमपि स्वयमेवेत्यर्थः । 'स्वे महिम्नि प्रतिष्ठितम्' (छां० ७।२४।१) इति श्रुतेः । कृतिना समर्थेन । इदं सर्वत्र संबध्यते । आत्मना स्वेनैवात्मन्येव प्रलीयसे स्वस्मिन्नेव प्रलीनो भवसि । लीयतेर्दैवादिकात्कर्तरि लट् । 'प्रकृत्यादिभ्य उपसंख्यानम्' (वा० १४६६) इति वार्तिकात्सर्वत्रात्मनेति तृतीया । न हि ते प्रपञ्चस्येव ज्ञानोत्पत्तिलयेषु परापेक्षेति फलितार्थः[1] ॥ १० ॥

**द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।**
**व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥ ११ ॥**

**द्रव इति** ॥ 'त्वम्' इत्यनुषज्यते । हे भगवन् ! त्वं द्रवः सरित्समुद्रादिवद्-

---

पाठा०—१ अनन्तो जगदन्तकः; जगदन्तोऽप्यनन्तकः. २ जगदीशोऽप्यनीश्वरः. ३ गुरुर्लघुः.

टिप्प०—1 'अत्र स्वाधीनात्मसर्गस्थितिप्रलयस्यास्य ब्रह्मणः पराधीनसर्गादेः प्रपञ्चाद्व्यतिरेकोक्तिः' इति नारायण० ।

सात्मकोऽसि । संघातेन निबिडसंयोगेन कठिनो महीधरादिवत् । स्थूल इन्द्रियग्रहणयोग्यो घटादिवत् । सूक्ष्मोऽतीन्द्रियः परमाण्वादिवत् । लघुरुत्पतनयोग्यस्तूलादिवत् । गुरुर्हेमाद्रिवदचलनीयः । व्यक्तः कार्यरूपोऽसि । व्यक्तेतरः कारणरूपश्चासि । एवं विभूतिष्व[1]णिमादिषु ते तव । प्रकामस्य भावः प्राकाम्यं यथाकामत्वम् ॥ ११ ॥

उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।
कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ १२ ॥

उद्घात इति ॥ हे भगवन् ! यासां गिरां वाचामुद्घात उपक्रमः प्रणव ओंकारात्मकः । 'ओंकारप्रणवौ समौ' इति । 'स्यादभ्यादानमुद्घात आरम्भः' इति चामरः । इदमुपसंहारस्याप्युपलक्षणम् । 'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वतः । दहत्येनः कृतं पूर्वं परस्ताच्च विशेषतः ॥' इति निरुक्तपरिशिष्टयोर्यास्कः । नीयन्त एभिरर्थविशेषा इति न्यायाः स्वराः । उक्तं च—'स्वरविशेषादर्थप्रतिपत्तिः' । 'यथेन्द्रशत्रुः स्वरतोऽपराधात्' (शिक्षा० ५२) इति । यासां गिरां त्रिभिर्न्यायैरुदात्तानुदात्तस्वरितैः स्वरैरुदीरणमुच्चारणम् । यासां कर्म, प्रतिपाद्यमित्यर्थः । यज्ञो ज्योतिष्टोमादिः, न तु चैत्यवन्दनादिरिति भावः । फलं स्वर्गः । कर्मद्वारेति शेषः । कर्मस्वर्गौ ब्रह्मापवर्गयोरप्युपलक्षणे । त्वं तासां गिराम्, वेदानामित्यर्थः । प्रभवत्यस्मादिति प्रभवः कारणम् । प्रणेता स्मर्ता वा मतभेदेन ॥ १२ ॥

सांख्यमतेन स्तुवन्ति—

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥ १३ ॥

त्वामिति ॥ हे भगवन् ! त्वां पुरुषस्यार्थौ भोगापवर्गरूपस्तदर्थं प्रवर्तत इति पुरुषार्थप्रवर्तिनी तां प्रकृतिं त्रैगुण्यात्मकं मूलकारणम् । 'प्रकृतिः पञ्चभूतेषु प्रधानं मूलकारणम्' इति यादवः । आमनन्ति कथयन्ति । 'म्ना अभ्यासे' इति धातोर्लट् । 'पाघ्राध्मास्थाम्ना—' (पा.७।३।७८) इत्यादिना मनादेशः । प्रकृतिपुरुष-

---

पाठा०—१ उद्गीथः.

टिप्प०—1 सप्तविभूतयस्तु–'अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वं च वशित्वं च तथा कामावसायिता ॥' इत्यादिनोक्ताः ।

भेदाग्रहणात्प्रकृतिपुरुषाभेदव्यपदेशः। त्वामेव तां प्रकृतिं साक्षित्वेन पश्यतीति तद्दर्शिनमुदासीनं कूटस्थं पुरुषं विदुर्विदन्ति। 'विदो लटो वा' (पा.३।४।८३) इति झेर्जुसादेशः 'अजामेकां लोहितशुक्लकृष्णाम्' (श्वेता० ४।५) इति श्रुतिरत्र प्रमाणम्॥ १३॥

त्वं पितॄणामपि पिता देवानामपि देवता[1]।
परतोऽपि परश्चासि विधाता वेधसामपि॥ १४॥

त्वमिति॥ हे भगवन्! त्वं पितॄणामग्निष्वात्तादीनामपि पिता, तेषामपि तर्पणीय इत्यर्थः। देवानामिन्द्रादीनामपि देवता, तेषामपि यजनीय इत्यर्थः। परतोऽपि परश्चासि, सर्वोत्तरोऽसीत्यर्थः। 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च परा बुद्धिर्बुद्धेरात्मा महान्परः॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः॥' (कठोप० १।३।११) इति सर्वोत्तरत्वाभिधानात्। वेधसां दक्षादीनामपि विधाता स्रष्टाऽसि॥ १४॥

त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः[2]।
[3]वेद्यं च वेदिता चासि ध्याता ध्येयं च यत्परम्॥ १५॥

त्वमेवेति॥ शश्वत्सिद्धः शाश्वतः। शैषिकोऽण्प्रत्ययः। यद्यपि 'कालाट्ठञ्' (पा.४।३।११) इति ठञपवादः। अत एव सूत्रकारस्यापि प्रयोगः—'येषां च विरोधः शाश्वतिकः' (पा.२।४।९) इति। तथापि प्रयोगवशात्साधुरिति वामन इत्याह—'शाश्वतमिति प्रयुक्तेः' (काव्या.सू.५।२।५१) 'इति। शाश्वतस्त्वमेव। हूयत इति हव्यं हविराज्यादिकम्। जुहोतीति। होता यजमानश्चासि। भोज्यमभ्यवहार्यमन्नम्। 'भोज्यं भक्ष्ये' (पा.७।३।६९) इति निपातनात्कुत्वाभावः। भोक्ताऽत्तादश्चासि। वेद्यं साक्षात्कार्यं वस्तु, वेदिता साक्षात्कर्ता चासि। ध्याता स्मर्ता च। यत्परं वस्तु ध्येयं तच्चासि। साक्षात्कारसाधनभूतप्रत्ययविशेषप्रवाहो ध्यानम्॥ १५॥

इति तेभ्यः स्तुतीः श्रुत्वा [4]यथार्था हृदयंगमाः।
प्रसादाभिमुखो वेधाः[5] प्रत्युवाच दिवौकसः॥ १६॥

---

पाठा०—१ दैवतम्. २ शाश्वतम्. ३ वेद्यं वेदयिता; वेद्यश्च वेदिता. ४ यथार्थं. ५ ब्रह्मा.

**इतीति** ॥ वेधा ब्रह्मेति तेभ्यो देवेभ्यः। 'आख्यातोपयोगे' (पा.१।४।२९) इत्यपादानत्वात्पञ्चमी। यथार्थाः सत्या अत एव हृदयं गच्छन्तीति हृदयंगमा मनोहराः। खच्प्रकरणे 'गमेः सुप्युपसंख्यानम्' (वा० २००९) इति खच्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' (पा.६।३।६७) इति मुमागमः। स्तुतीः स्तोत्राणि श्रुत्वा प्रसादाभिमुखोऽनुग्रहप्रवणः सन्। दिवौकसो देवान्प्रत्युवाच ॥ १६ ॥

अथ कविराह—

**पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता।**
**प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥ १७ ॥**

**पुराणस्येति** ॥ द्रव्यगुणक्रियाजातिभेदेन चत्वारोऽवयवा यस्या इति चतुष्टयी चतुर्विधा। 'संख्याया अवयवे तयप्' (पा.५।२।४२) इति तयप्। 'टिड्ढाणञ्द्वय-सच्' (पा.४।१।१५) इत्यादिना ङीप्। शब्दानां प्रवृत्तिर्वैखरीप्रमुखा वाग्वृत्तिः। उक्तं च—'वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा। द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनी ॥' इति। पुराणस्य पुरातनस्य। पृषोदरादित्वात्साधुः। कवेः कवयितुस्तस्य ब्रह्मणश्चतुर्भिर्मुखैः समीरिता सती। 'तद्धितार्थ—' (पा.२।१।५१) इत्यादिनोत्तरपदसमासः। समाहारे चतुर्मुखीति स्यात्। चरितार्थान्वर्थासीत्। चतुर्मुखोच्चारणाच्चातुर्विध्यं सफलमासीदित्यर्थः ॥ १७ ॥

भगवानाह—

**स्वागतं स्वानधीकारान् प्रभावैरवलम्ब्य वः।**
**युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः! ॥ १८ ॥**

**स्वागतमिति** ॥ हे प्राज्यविक्रमाः प्रभूतपराक्रमा देवाः! 'प्राज्यं भूरि प्रभूतं च' इति यादवः। स्वान्स्वकीयानधीकारान्नियोगान्। 'उपसर्गस्य घञि—' (पा.६।३।१२२) इति वा दीर्घः। प्रभावैः सामर्थ्यैरवलम्ब्यास्थाय, यथाधिकारं स्थित्वापीत्यर्थः। युगपत्समकालं प्राप्तेभ्यः, युगपत्प्राप्त्या महत्कार्यमनुमीयत इति भावः। युगबाहुभ्यः, दीर्घबाहुभ्य इत्यर्थः। आजानुबाहुत्वं भाग्यलक्षणम्, वो युष्मभ्यम्। 'बहुवचनस्य वस्नसौ' (पा.८।१।२१) इति वसादेशः। 'कर्मणा यमभिप्रैति—' (पा.१।४।३२) इत्यत्र कर्मपदेन क्रियाग्रहणात्संप्रदानत्वम्। स्वागतं शोभनमागमनम्? काकुरत्रानुसंधेया ॥ १८ ॥

किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा।
हिमक्लिष्टप्रकाशानि ज्योतींषीव मुखानि वः ॥ १९ ॥

किमिति ॥ 'वत्साः' इत्युत्तरश्लोकीय (२।२८) संबोधनमत्राप्यनुषञ्जनीयम्। हे वत्साः पुत्रकाः! हिमेन नीहारेण क्लिष्टप्रकाशानि मन्दप्रभाणि ज्योतींषि नक्षत्राणीव। 'दीप्तिताराहुताशेषु ज्योतिः' इति शाश्वतः। वो युष्माकं मुखानि पुरा यथा पूर्वमिवात्मीयां द्युतिं न बिभ्रति। इदं किम्? किंनिबन्धनमित्यर्थः। किमिदमित्यनेन वाक्यार्थः परामृश्यते ॥ १९ ॥

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः—

प्रशमादर्चिषामेतदनुद्गीर्णसुरायुधम्।
वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते ॥ २० ॥

प्रशमादिति ॥ अर्चिषां तेजसां प्रशमान्निर्वाणादनुद्गीर्णसुरायुधम्। अनुदितचित्रप्रभमित्यर्थः। एतद्वृत्रस्य हन्तुरिन्द्रस्य कुलिशं वज्रम्। कुण्ठिता अश्रयो यस्य तत्कुण्ठिताश्रि कुण्ठितकोटीव लक्ष्यते दृश्यते ॥ २० ॥

किं चायमरिदुर्वारः पाणौ पाशः प्रचेतसः।
मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥ २१ ॥

किं चेति ॥ किं च, अयमरिदुर्वारो रिपुदुष्प्रधर्षः प्रचेतसो वरुणस्य। 'प्रचेता वरुणः पाशी' इत्यमरः। पाणौ पाशो रज्जुरायुधविशेषः। मन्त्रेण गारुडेन हतवीर्यस्य प्रतिबद्धशक्तेः फणिनः सर्पस्य दैन्यं शोच्यत्वमाश्रितः। अत्र फणिनिष्ठदैन्यस्य पाशेऽसंभवाद्दैन्यमिव दैन्यमिति कल्पनादसंभवद्वस्तुसंबन्धो निदर्शनालंकारः॥ २१॥

कुबेरस्य मनःशल्यं शंसतीव पराभवम्।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २२ ॥

कुबेरस्येति ॥ अपविद्धा त्यक्ता गदा येन सोऽपविद्धगदः। अत एव भग्नशाखो द्रुम इव स्थितः कुबेरस्य बाहुर्मनःशल्यम्, दुःखहेतुत्वान्मनसः शल्यप्रायत्वमित्यर्थः। पराभवम्, शत्रुकृतमिति शेषः। शंसतीव कथयतीव, लक्षणयाऽनुमापयतीत्यर्थः। बाहौ मुख्यकथनस्यासंभवादिवशब्दोऽप्यत एव ॥ २२ ॥

---

पाठा०—१ यथापुरम्. २ इमाम्; इति. ३ प्रभावानि. ४ अनुद्गूर्णः, अनुगूर्ण, ५ कुण्ठितश्रीव. ६ अपि.

यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥ २३ ॥

यम इति ॥ अस्तं नाशमिताः प्राप्ताः, अस्तमिति मकारान्तमव्ययम् । तस्य 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' (पा.२।१।२४) इति समासः। अस्तमितास्त्विषो यस्य तेन निस्तेजस्केन दण्डेन यमोऽपि भूमिं विलिखन्नमोघेऽपि । प्रागिति भावः । अस्मिन्दण्डे निर्वाणालातस्य शान्तोल्मुकस्य । अलातं नाम भूलेखनशलाका, तस्य यल्लाघवं क्लैब्यं तत्कुरुते । 'अलातमुल्मुकं ज्ञेयम्' इति हलायुधः । 'निर्वाणोऽवाते' (पा.८।२।५०) इति निपातनान्निष्ठानत्वम् । अत्रापि लाघवमिव लाघवमिति कल्पनान्निदर्शनालंकारः ॥ २३ ॥

अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥ २४ ॥

अमी इति ॥ प्रतापक्षत्या तेजसां क्षयेण शीतला अमी आदित्याश्च । द्वादशेति[1] शेषः । कथम्, केन हेतुनेत्यर्थः । चित्रन्यस्ताश्चित्रलिखिता इव । प्रकाममत्यन्तमालोकनीयतां दृश्यतां गताः प्राप्ताः ? ॥ २४ ॥

पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २५ ॥

पर्याकुलेति ॥ मरुतां वायूनाम् । सप्तसप्तानामिति[2] शेषः । पर्याकुलत्वात्स्खलितगतित्वाद्धेतोर्वेगस्य भङ्गोऽम्भसां जलानां प्रतीपगमनात्, उत्तानावरोहादित्यर्थः । ओघस्य संरोधः प्रवाहप्रतिबन्ध इवानुमीयते ॥ २५ ॥

आवर्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्धानः क्षतहुंकारशंसिनः ॥ २६ ॥

---

पाठा०—१ क्षितिशीतलाः. २ आयाताः. ३ दर्शिनः, दर्शनम्. ४ अहंकार.

टिप्प०—1 ते च–'धाता मित्रोऽर्यमा रुद्रो वरुणः सूर्य एव च । भगो विवस्वान् पूषा च सविता दशमः स्मृतः । एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ॥' इत्यनेनोक्ताः । 2 सप्तमरुतस्तु–'आवहः प्रवहश्चैव संवहश्चोद्वहस्तथा । विवहाख्यः परिवहः परावह इति क्रमात् ॥' इति ।

आवर्जितेति ॥ आवर्जितेषु परिभवदुःखावनम्रेषु जटानां मौलिषु जटाजूटेषु विलम्बिन्यः स्रंसिन्यः शशिकोटयश्चन्द्ररेखा येषां ते तथोक्ताः । रुद्राणामपि, एकादशानामिति शेषः । मूर्धानः क्षतं हुंकारं शंसन्तीति तथोक्ताः, हुंकारक्षत्यनुमापका इत्यर्थः । हुंकारशस्त्रा हि रुद्रा इति भावः ॥ २६ ॥

लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २७ ॥

लब्धेति ॥ प्रथमं पूर्वं लब्धप्रतिष्ठा लब्धस्थितयः । लब्धावकाशा इत्यन्यत्र । यूयं बलवत्तरैः पौरुषातिरेकात्प्रबलतरैः । निरवकाशैरित्यपरत्र । परैः शत्रुभिरुत्सर्गाः सामान्यशास्त्राणि 'मा हिंस्यात्' इत्येवमादीनि । अपोद्यन्त एभिरित्यपवादैः 'गामालभेत' इत्यादिभिर्विशेषशास्त्रैरिव । किं कृतव्यावृत्तयः कृतप्रतिष्ठाभङ्गाः ? । कृतविषयसंकोचरूपबाधा इत्यन्यत्र । 'विषयसंकोच एव बाधः' इत्याचार्याः । निषेधशास्त्रस्यावैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्थापनाद्विषयसंकोच इत्यलमतिगहनावगाहनेन ॥ २७ ॥

तद्ब्रूत वत्साः ! किमितः प्रार्थयध्वं समागताः ।
मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥ २८ ॥

तदिति ॥ तत्तस्मात्कारणात् । हे वत्साः पुत्रकाः ! 'वत्सस्त्वर्भकपुत्राद्योर्वर्षे वत्सं तु वक्षसि' इति विश्वः । स्वयं पितामहत्वाद्वत्सा इत्यामन्त्रयते । संभूयागताः समागता इतो मत्तः किं प्रार्थयध्वम् ? किमिच्छतेत्यर्थः । ब्रूत । लोकरक्षणे यूयमेव कर्तार इत्याह—मयि लोकानां सृष्टिः । रक्षा युष्मास्ववस्थिता, अतस्तदर्थमपि नास्ति मदपेक्षेत्यर्थः ॥ २८ ॥

ततो मन्दानिलोद्धूतकमलाकरशोभिना ।
गुरुं नेत्रसहस्रेण नोदयामास वासवः ॥ २९ ॥

तत इति ॥ ततो भगवत्प्रश्नानन्तरं वासव इन्द्रो गुरुं बृहस्पतिम् । 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः । मन्दानिलोद्धूतो यः कमलाकरः स इव शोभत इति तेन तथोक्तेन नेत्राणां सहस्रेण नोदयामास प्रेरयामास । सहस्रग्रहणमास्यातिशयार्थम् । अनिमेषाणामपि प्रयत्नवशादक्षिस्पन्दो न विरुध्यते ॥ २९ ॥

---

पाठा०—१ न खलु स्थ बलोत्तरैः. २ प्रार्थयध्वे. ३ भूतानाम्. ४ चोदयामास; प्रेरयामास. ५ वृत्रहा.

**स द्विनेत्रं[1] हरेश्चक्षुः सहस्रनयनाधिकम्[2] ।**
**वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥ ३० ॥**

**स इति** ॥ हरेरिन्द्रस्य। 'इन्द्रो दुश्च्यवनो हरिः' इति हलायुधः। सहस्रान्नयनेभ्योऽधिकं सहस्रनयनाधिकम्, तदगोचरदर्शित्वादिति भावः। द्वे नेत्रे यस्य तद्द्विनेत्रम्, प्रसिद्धाच्चक्षुषोऽयं विशेष इत्यर्थः। चक्षुश्चक्षुर्भूतः। चक्षुष्ट्वारोपस्य प्रकृतोपयोगात्परिणामालंकारः। स वाचस्पतिः। कस्कादित्वादलुक्सत्वे। 'षष्ठ्याः पतिपुत्र–' (पा.८।३।५३) इत्यादिना सत्वमिति स्वामी,–तन्न; छन्दोविषयत्वात्। प्राञ्जलिः सन्। जलजासनं ब्रह्माणमिदमुवाच ॥ ३० ॥

**एवं यदात्थ[3] भगवन्नामृष्टं नः परैः पदम् ।**
**प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो[4] ! ॥ ३१ ॥**

**एवमिति** ॥ हे भगवन् षड्गुणैश्वर्यसंपन्न! यदात्थ 'कृतव्यावृत्तयः परैः' (२।२७) इति यद्ब्रवीषि। 'ब्रुवः पञ्चानाम्' (पा.३।४।८४) इत्यादिनाहादेशः। 'वर्तमानसामीप्ये वर्तमानवद्वा' (पा.३।३।१३१) इति वर्तमानप्रयोगः। वामनस्तु भ्रान्तोऽयं प्रयोग इत्याह–'आहेति भूते णलन्तभ्रमात्–' (काव्या.सू.५।२।४४) इति। आहेत्युपलक्षणम्। तदेव सत्यम्। नोऽस्माकं पदमधिकारः परैः शत्रुभिरामृष्टमाक्षिप्तम्। हे प्रभो! प्रत्येकं प्रतिपुरुषं विनियुक्तात्मा प्रवेशितस्वरूपः, सर्वान्तर्यामीत्यर्थः। कथं न ज्ञास्यसि न वेत्सि? वर्तमानेऽपि वचनभङ्ग्या भविष्यन्निर्देशः प्रसिद्धः। 'अपह्नवे ज्ञः' (पा.१।३।४४) 'अकर्मकाच्च' (पा.१।३।२६) इत्यात्मनेपदविकल्पः ॥ ३१ ॥

उक्तमेव प्रपञ्चयति—

**भवल्लब्धवरोदीर्णस्तारकाख्यो[5] महासुरः ।**
**उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ ३२ ॥**

**भवदिति** ॥ भवतस्त्वत्तो लब्धेन वरेणोदीर्ण[2] उद्धतः तारक इत्याख्या

---

पाठा०—१ द्विनेत्रः. २ दशचक्षुःशताधिकम्. ३ यथा. ४ ज्ञास्यति प्रभुः. ५ त्वया दत्त; भवद्दत्त.

---

टिप्प०—1 'ऋ गतौ इत्यस्य निष्ठा 'लिङ्सिचोरात्मनेपद–' इति विकल्पद्वकत्वात् 'यस्य विभाषा' इतीड्भावः' इति बालबोधिनी। 2 सेयं कथा महाभारतात् ( कर्णपर्वणस्त्रयस्त्रिंशाध्यायात् ) अनुसंधेया।

नामधेयं यस्य स तारकाख्यः। महानसुरो महासुरः। 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' (पा.२।१।६१) इति तत्पुरुषः। धूमकेतुरुत्पातविशेष इव लोकानामुपप्लवायोपद्रवायोत्थित उत्पन्नः ॥ ३२ ॥

पुरे तावन्तमेवास्य तनोति[1] रविरातपम्।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ॥ ३३ ॥

पुर इति ॥ अस्य तारकस्य पुरे रविः सूर्यस्तावन्तं तावन्मात्रमेवातपं तनोति। यावन्मात्रेण यावतैव। यावती मात्रा मितिर्यस्य यावन्मात्रं तेन वा, अल्पपरिमाणेनेत्यर्थः। 'मात्रा परिच्छदे। अल्पे च परिमाणे सा मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। दीर्घिकासु क्रीडावापीषु कमलानामुन्मेषो विकासः साध्यते निष्पाद्यते। कठोरकिरणोऽपि मन्दोष्णः सन्नेव तद्भीत्या पुरे प्रकाशत इत्यभिप्रायः ॥ ३३ ॥

सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते।
नादत्ते केवलां लेखां हरचूडामणीकृताम् ॥ ३४ ॥

सर्वाभिरिति ॥ चन्द्रस्तं तारकं सर्वदा, कृष्णपक्षेऽपीत्यर्थः। सर्वाभिः कलाभिर्निषेवते। 'कला तु षोडशो भागः' इत्यमरः। केवलां हरचूडामणीकृतां शिवशिरोमणीकृतां लेखां नादत्ते न गृह्णाति ॥ ३४ ॥

व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात्।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥ ३५ ॥

व्यावृत्तेति ॥ वायुः स्तेनस्य भावः कर्म वा स्तेयं चौर्यम्। 'स्तेनाद्यन्नलोपश्च' (पा.५।१।१२५) इति यत्प्रत्ययो नलोपश्च। कुसुमानां स्तेयं तस्मात्स्तेयाभियोगाद्दण्डाद्वा साध्वसं भयं तस्माद्धेतोरुद्याने व्यावृत्तगतिः। निवृत्तोद्यानसंचारः सन्नित्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। तत्पार्श्वे तत्समीपे। तालस्य वृन्तैरुद्धूयते। तालस्येव वृन्तमस्येति वा तालवृन्तं तस्यानिलाद्व्यजनसंचारपवनादधिकं यथा तथा न वाति। 'व्यजनं तालवृन्तकम्' इत्यमरः ॥ ३५ ॥

पर्यायसेवामुत्सृज्य पुष्पसंभारतत्पराः।
उद्यानपालसामान्यमृतवस्तमुपासते ॥ ३६ ॥

पर्यायेति ॥ ऋतवः षड्वसन्तादयः पर्यायसेवां क्रमसेवामुत्सृज्य पुष्पाणां

---

पाठा०—1 करोति.

संभारे संग्रहे तत्पराः, आसक्ताः सन्त इत्यर्थः । 'तत्परे प्रसितासक्तौ' इत्यमरः । उद्यानपालैरुद्यानाधिकृतैः सामान्यं साधारणं यथा भवति तथा तं तारकमुपासते सेवन्ते, शीतोष्णादिदोषप्रकाशनं तु दूरापास्तमित्यर्थः ॥ ३६ ॥

तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।
कथमप्यम्भसामन्तराऽऽनिष्पत्तेः प्रतीक्षते ॥ ३७ ॥

तस्येति ॥ सरितां पतिः समुद्रस्तस्य तारकस्योपायनानां प्राभृतानां योग्यानि । 'प्राभृतं तु प्रदेशनम् । उपायनम्' इत्यमरः । रत्नान्यम्भसामन्तः आनिष्पत्तेः परिपाकपर्यन्तम् । विकल्पादसमासः । कथमपि महता यत्नेन प्रतीक्षते, कदा वा परिपच्येरन्नित्यैकाग्र्येण पालयतीत्यर्थः ॥ ३७ ॥

ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा[1] निशि ।
स्थिरप्रदीपतामेत्य भुजंगाः पर्युपासते ॥ ३८ ॥

ज्वलदिति ॥ किंचेति चार्थः । ज्वलन्त्यो मणीनां शिरोरत्नानां शिखा ज्वाला येषां ते वासुकिप्रमुखा भुजंगाः सर्पाः सिद्धाश्च ध्वन्यन्ते । 'भुजंगः षिङ्ग-सर्पयोः' इत्यमरः । निशि स्थिरप्रदीपतामनिर्वाणदीपत्वमेत्यैनं तारकं पर्युपासते परिवृत्य सेवन्ते ॥ ३८ ॥

तत्कृतानुग्रहापेक्षी [2]तं मुहुर्दूतहारितैः ।
अनुकूलयतीन्द्रोऽपि [3]कल्पद्रुमविभूषणैः ॥ ३९ ॥

तत्कृतेति ॥ इन्द्रोऽपि तेन तारकेण कृतं तत्कृतमनुग्रहं प्रसादमपेक्षत इति तथोक्तः सन् । मुहुर्दूतहारितैर्दूतप्रापितैः कल्पद्रुमाणां विभूषणैः, तत्प्रसूनैरि-त्यर्थः । तं तारकमनुकूलयत्यनुकूलं करोति ॥ ३९ ॥

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत्[4]प्रत्यपकारेण नोपकारेण दुर्जनः ॥ ४० ॥

इत्थमिति ॥ इत्थमुक्तप्रकारेण रविशशिपवनोदधिभुजंगसुरेन्द्रैराराध्यमा-नोऽपि भुवनत्रयं क्लिश्नाति पीडयति । तथा हि—दुर्जनः प्रत्यपकारेण प्रतीकारे-णैव शाम्येच्छान्तो भवेत्; उपकारेण तु न शाम्येत्, प्रत्युत प्रकुप्यतीति भावः ॥ ४० ॥

पाठा०—१ प्रहिताः. २ प्रत्यहम्. ३ स्वर्गद्रुम. ४ प्रत्युपकारेण.

तेनामरवधूहस्तैः सदयालूनपल्लवाः ।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ॥ ४१ ॥

**तेनेति** ॥ तेन तारकेणामरवधूहस्तैः, सुकुमारैरिति भावः । तैरपि सदयमालूना अवतंसार्थं छिन्नाः पल्लवा येषां ते नन्दनद्रुमाः । छेदाश्च पाताश्च छेदपातास्तेषाम् । अभिजानन्तीत्यभिज्ञाः । कृद्योगात्कर्मणि षष्ठी । क्रियन्ते ॥ ४१ ॥

वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः ।
चामरैः सुरबन्दीनां बाष्पशीकरवर्षिभिः ॥ ४२ ॥

**वीज्यत इति** ॥ हि यस्मात्कारणात्स तारकः संसुप्तः सन् । श्वाससाधारणो निःश्वाससमानोऽनिलो येषां तैः, ततोऽप्याधिक्ये निद्राभङ्गभयादिति भावः । बाष्पशीकरवर्षिभिः, तासां स्त्रीणां रोदनस्यायमवसर इति भावः । सुरबन्दीनां सुरप्रग्रहस्त्रीणां संबन्धिभिः । 'प्रग्रहापग्रहौ बन्द्याम्' इत्यमरः । चामरैर्वीज्यते ॥ ४२ ॥

उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः ।
आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥ ४३ ॥

**उत्पाट्येति** ॥ तेन तारकेण हरितां सूर्याश्वानाम् । 'हरित् सूर्ये च सूर्याश्वे वर्णे च हरिते दिशि' इति विश्वः । खुरैः शफैः क्षुण्णानि चूर्णितानि । एतेन तेषामत्यौन्नत्यं सूचितम् । मेरुशृङ्गाण्युत्पाट्य स्वेषु वेश्मसु । 'वेश्मसु' इति बहुवचनेनास्य भुवनत्रयनिवासः सूचितः । आक्रीडन्त एष्वित्याक्रीडाः, ते च ते पर्वताः कल्पिताः कृताः ॥ ४३ ॥

मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् ।
हेमाम्भोरुहशस्यानां तद्वाप्यो धाम सांप्रतम् ॥ ४४ ॥

**मन्दाकिन्या इति** ॥ सांप्रतं संप्रति मन्दाकिन्या भागीरथ्या दिग्वारणानां दिग्गजानां मदैराविलं कलुषं पयो जलमेव शिष्यत इति शेषं शिष्टम् । कर्मणि घञ्प्रत्ययः । '–त्रिष्वन्यत्रोपयुज्यते' इति नपुंसकत्वम् । तर्हि कनककमलानि क्व गतानीत्याह—**हेमेति** । हेमाम्भोरुहाण्येव शस्यानि तेषां तु तस्य वाप्यस्तद्वाप्य एव धाम स्थानम् । सर्वाण्यप्युत्पाट्य स्वदीर्घिकास्वेव प्रतिरोपितवानित्यर्थः ॥४४॥

---

पाठा०—१ हस्तसदया.

भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात्पथि ॥ ४५ ॥

भुवनेति ॥ तस्य तारकस्यापातात् समापत्तेर्भयाद्विमानानां पथि खिलीभूते अप्रहतीभूते सति। 'द्वे खिलाप्रहते समे' इत्यमरः। स्वर्गिभिर्देवैर्भुवनानामालोकने प्रीतिर्नानुभूयते ॥ ४५ ॥

यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः ।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥ ४६ ॥

यज्वभिरिति ॥ यज्वभिर्विधिवदिष्टवद्भिः। 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोर्ङ्वनिप्' (पा.३।२।१०३) इति ङ्वनिप्प्रत्ययः । विततेष्वध्वरेषु यज्ञेषु संभृतं दत्तं हव्यं हविर्मायी मायावी । व्रीह्यादित्वादिनिप्रत्ययः। स तारको नोऽस्माकं मिषतां पश्यताम्, पश्यत्सु सत्स्वित्यर्थः। 'षष्ठी चानादरे' (पा.२।३।३८)इति षष्ठी ।जातवेदा वह्निरेव मुखं तस्माज्जातवेदोमुखादाच्छिनत्ति, आक्षिप्य गृह्णातीत्यर्थः ॥ ४६ ॥

उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च ।
देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः ॥ ४७ ॥

उच्चैरिति ॥ किं चेति चार्थः । तेन तारकेणोच्चैरुन्नत उच्चैःश्रवा नाम हयो रत्नमिव हयरत्नमश्वश्रेष्ठः। 'रत्नं श्रेष्ठे मणावपि' इति विश्वः। अस्य शुभ्रत्वादुत्प्रेक्षते—देहबद्धं बद्धदेहम्, मूर्तिमदित्यर्थः। आहिताग्न्यादित्वान्निष्ठायाः परनिपातः। चिरकालार्जितमिन्द्रस्य यश इव। अहार्यपहृतम् ॥ ४७ ॥

तर्हि सामाद्युपायास्तत्र कथं न प्रयुक्ता इत्यत्राह—

तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ।
वीर्यवन्त्यौषधानीव विकारे सांनिपातिके ॥ ४८ ॥

तस्मिन्निति ॥ क्रूरे घातुके। 'नृशंसो घातुकः क्रूर' इत्यमरः। तस्मिन्नसुरे नोऽस्माकं सर्वे उपायाः संनिपातदोषत्रयस्य प्रकोपजे सांनिपातिके विकारे ज्वरादौ। 'संनिपाताच्च' (वा० ३०३४) इति वक्तव्याट्ठक्। वीर्यवन्ति सारवन्त्यौषधानीव प्रतिहतक्रिया विफलप्रयोगा भवन्ति ॥ ४८ ॥

---

पाठा०—1 पिबताम्.

तदेव प्रतिहतक्रियत्वमाह—

जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम् ॥ ४९ ॥

जयाशेति ॥ किंचेति चार्थः । नूनमनेन हरिचक्रेण वयं जेष्याम इति यत्र हरिचक्रेऽस्माकं जयाशा विजयाशंसा, आसीदिति शेषः । प्रतिघातेन प्रतिहत्योत्थितार्चिषोद्गततेजसा तेन हरिचक्रेण विष्णोः सुदर्शनेनास्य तारकस्य कण्ठे निष्कमुरो भूषणमर्पितमिवेत्युत्प्रेक्षा, स्वयमेव निष्कमिव स्थितमित्यर्थः । तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं तदपि नष्टशक्ति जातमिति भावः । 'साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री' इत्यमरः ॥ ४९ ॥

तदीयास्तोयदेष्वद्य पुष्करावर्तकादिषु ।
अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः ॥ ५० ॥

तदीया इति ॥ अद्य संप्रति निर्जित ऐरावतो यैस्ते तथोक्ताः । तस्य तारकस्येमे तदीया गजाः पुष्कराश्चावर्तकाश्च नामादयो येषां तेषु तोयदेषु मेघेषु तटाघातं वप्रक्रीडामभ्यस्यन्ति ॥ ५० ॥

तदिच्छामो विभो! स्रष्टुं सेनान्यं तस्य शान्तये ।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ५१ ॥

तदिति ॥ तत्तस्मात्कारणात् । हे विभो स्वामिन्! मोक्तुं भवं त्यक्तुमिच्छवो मुमुक्षवो विरक्ता भवस्य संसारस्य शान्तये निवृत्तये कर्मैव बन्धस्तं छिनत्तीति कर्मबन्धच्छित् तं धर्ममिव, आत्मज्ञानहेतुभूतमिति शेषः । 'तमेव विदित्वातिमृत्युमेति' (श्वेता० ३।८) इति ज्ञानादेव मुक्तिः । तस्य तारकस्य शान्तये नाशाय । सेनां नयतीति सेनानीश्चमूपतिः । 'सत्सूद्विष—' (पा. ३।२।६१) इत्यादिना क्विप् । तं सेनान्यं कंचित्स्रष्टुमिच्छामः, वयमिति शेषः ॥ ५१ ॥

सेनानीसृष्टेः फलमाह—

गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम् ॥ ५२ ॥

पाठा०—१ निष्कः. २ अर्पितः. ३ तटाघातान्.

टिप्प०—1 "स्रष्टुम्" इति वा पाठे त्वयेति शेषः । "स्रष्टुं" इति केचनापपाठं मन्यन्ते' इति बाल० ।

गोप्तारमिति ॥ सुरसैन्यानां देवतासेनानां गोप्तारं रक्षितारं यं सेनान्यं पुरस्कृत्य पुरोधाय । 'पुरोऽव्ययम्' (पा.१।४।६७) इति गतित्वात् 'नमस्पुरसोर्गत्योः' (पा.८।३।४०) इति सकारः । गां पृथ्वीं त्रायन्त इति गोत्रास्तान् भिनत्तीति गोत्रभिदिन्द्रो जयश्रियं बन्दीमिव बन्दीकृतां स्त्रियमिव शत्रुभ्यः सकाशात् प्रत्यानेष्यति प्रत्याहरिष्यति । तं स्रष्टुमिति पूर्वेण संबन्धः ॥ ५२ ॥

**वचस्यवसिते[1] तस्मिन्[2]ससर्ज गिरमात्मभूः ।**
**गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा[3] ॥ ५३ ॥**

वचसीति ॥ तस्मिन्बार्हस्पत्ये वचस्यवसिते परिसमाप्ते सति आत्मभूर्ब्रह्मा गिरं वाचं ससर्ज । जगादेत्यर्थः । सा गीः सौभाग्येन मनोहरत्वेन । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (पा.७।३।१९) इत्युभयपदवृद्धिः । गर्जिताद्गर्जितस्य वानन्तरं प्रवृत्तां वृष्टिं जिगाय जितवती । गर्जितपरत्वाद्वृष्टेरिव तद्विज्ञापनफलत्वाद्गिरः सुभगत्वमिति भावः ॥ ५३ ॥

**संपत्स्यते वः कामोऽयं कालः कश्चित्प्रतीक्ष्यताम् ।**
**न त्वस्य सिद्धौ[4] यास्यामि सर्गव्यापारमात्मना ॥ ५४ ॥**

संपत्स्यत इति ॥ अयं वो युष्माकं कामो मनोरथः सेनानीरूपः संपत्स्यते सेत्स्यति । कश्चित्कियानपि कालः प्रतीक्ष्यताम्, तु किंतु तस्य सेनान्यः सिद्धौ विषय आत्मना स्वयं सर्गः सृष्टिरेव व्यापारस्तं न यास्यामि, नाहं स्रक्ष्यामीत्यर्थः ॥ ५४ ॥

कुत इत्याशङ्क्याह—

**इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।**
**विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥ ५५ ॥**

इत इति ॥ इतो मत्त एव प्राप्तश्रीर्लब्धोदयः स दैत्यस्तारकासुर इतो मत्त एव क्षयं नाशं नार्हति । तथा हि—अन्यो वृक्षस्तावदास्ताम् । विषस्य वृक्षो विषवृक्षोऽपि संवर्ध्य कुतश्चित्कारणात्सम्यग्वर्धयित्वा स्वयं छेत्तुमसांप्रतमनर्हः । 'असांप्रतम्' इत्यनेन निपातेनाभिहितत्वाद्वृक्ष इति द्वितीयान्तो न भवति, अनभिहिते कर्मणि द्वितीयाभिधानात् । यथाह वामनः (काव्या.सू.५।२।२२)— 'निपातेनाप्यभिहिते कर्मणि न विभक्तिः, परिगणनस्य प्रायिकत्वात्' इति ॥ ५५ ॥

---

पाठा०—१ उपरते. २ तस्य. ३ या. ४ सिद्ध्यै.

वृतं[1] तेनेदमेव प्राङ्[2] मया चास्मै प्रतिश्रुतम् ।
वरेण शमितं[3] लोकानलं दग्धुं हि तत्तपः ॥ ५६ ॥

वृतमिति ॥ प्राक्पूर्वं तेनासुरेणेदमेव देवैरवध्यत्वमेव वृतं प्रार्थितम् । मया चास्मै तारकाय प्रतिश्रुतं प्रतिज्ञातम् । 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (पा. १।४।४०) इति संप्रदानत्वाच्चतुर्थी । कर्तव्यं चैतदित्याह—लोकान् दग्धुमलं शक्तम् । 'पर्याप्तिवचनेष्वलमर्थेषु' (पा. ३।४।६६) इति तुमुन्प्रत्ययः । तस्य तपस्तत्तपो वरेण वरदानेन शमितं हि, मयेति शेषः ॥ ५६ ॥

संयुगे सांयुगीनं तमुद्यतं[4] प्रसहेत कः ।
अंशादृते निषिक्तस्य नीललोहितरेतसः ॥ ५७ ॥

संयुग इति ॥ संयुगे युद्ध उद्यतं व्याप्रियमाणम् । संयुगे साधु सांयुगीनम् । 'प्रतिजनादिभ्यः खञ्' (पा.४।४।९९) इति खञ्प्रत्ययः । तं तारकं निषिक्तस्य कस्मिंश्चित्क्षेत्रे क्षरितस्य । 'नीलः कण्ठे लोहितश्च केशेष्विति नीललोहित इति पुराणम्' इति स्वामी । तस्य नीललोहितस्य धूर्जटे रेतसः शुक्रस्यांशादृतेंऽशं विनाऽन्यः कः प्रसहेताभिभवेत् ? 'प्रसहनमभिभवः' इति वृत्तिकारः ॥ ५७ ॥

कथमसावीदृक्शक्तिरित्याह—

स हि देवः परं ज्योतिस्तमःपारे व्यवस्थितम्[5] ।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥ ५८ ॥

स इति ॥ स देवो नीललोहितस्तमसः पारे परतो व्यवस्थितं तमोगुणातीतं परं ज्योतिः[2] परमात्मा हि । अत एव मया परिच्छिन्नप्रभावर्द्धिरवगाढमहिमातिशयो न भवति, तथा विष्णुना च न, अतस्तस्यासाध्यं नास्तीत्यर्थः ॥ ५८ ॥

---

पाठा०—१ वृतः. २ अहम्; आदौ. ३ अशमितम्. ४ उद्यन्तम्; युध्यन्तम्. ५ प्रतिष्ठितम्.

---

टिप्प०—1 'तपसो ह्यवश्यं फलेन भाव्यम्, तद् वरेण यदि न शाम्येत्तदाधिकोपद्रवाय क्षमं स्यात्' इति बाल० । 2 'ज्योतिः-शब्दस्य नित्यनपुंसकत्वेन विशेषणविशेष्यभावेऽप्यदोषः; ''वेदाः प्रमाणम्'' इतिवत्' इति बाल० ।

संप्रति तदंशोत्पत्तावुपायं दर्शयति—

**उमारूपेण ते यूयं संयमस्तिमितं मनः ।**
**शंभोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ ५९ ॥**

उमेति ॥ ते कार्यार्थिनो यूयं संयमस्तिमितं समाधिनिश्चलं शंभोर्मन उमारूपेणोमासौन्दर्येण । 'रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः । ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि ॥' इति विश्वः । अयस्कान्तेन मणिविशेषेण । 'कस्कादिषु च' (पा.८।३।४८) इति सकारः । लोहवदयोधातुमिव । 'तेन तुल्यं क्रिया चेद्वतिः' (पा.५।१।११५) इति वतिप्रत्ययो मृग्यः । आक्रष्टुमाहर्तुं यतध्वमुद्युक्ता भवत ॥ ५९ ॥

न च गत्यन्तरमस्तीत्याह—

**उभे एव क्षमे वोढुमुभयोर्बीजमाहितम् ।**
**सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम ॥ ६० ॥**

उभे इति ॥ उभयोः शंभोर्मम चाहितं निषिक्तं बीजं तेजो वोढुं सा वोमा शंभोरष्टमूर्तेस्तस्येयं तदीया जलमयी मूर्तिर्वा मम, उभे एव क्षमे, न तृतीयेत्यर्थः । 'वा'शब्दो द्वन्द्वार्थे, न त्वन्यार्थे । एतदेवोदाहृत्येत्थमेव व्याख्यातं गणव्याख्याने । अत्र दीपकालंकारः । प्राकरणिकयोरुमामहेश्वरयोरप्राकरणिकयोर्ब्रह्मजलमूर्त्योश्चौपम्यस्य गम्यत्वात् । यथाह भोजराजः—'प्रस्तुतानामप्रस्तुतानां चौपम्यस्य गम्यत्वे दीपकम्' इति । न चेयं तुल्ययोगिता, तस्याः केवलप्रस्तुतविषयत्वेन केवलाप्रस्तुतविषयत्वेन चोत्थानादिति ॥ ६० ॥

**तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य वः ।**
**मोक्ष्यते सुरबन्दीनां वेणीर्वीर्यविभूतिभिः ॥ ६१ ॥**

तस्येति ॥ तस्य शितिकण्ठस्याष्टमूर्तेरात्मा, पुत्र इत्यर्थः । 'आत्मा वै पुत्रनामासि' (कौषी०२।११) इति श्रुतेः । वो युष्माकं सेनापतेर्भावः सैनापत्यम् । 'पत्यन्तपुरोहितादिभ्यो यक्' (पा.५।१।२८) इति यक्प्रत्ययः । उपेत्य प्राप्य वीर्य-

---

पाठा०—१ सोढुम्. २ सेनापत्यम्. ३ वेणीबन्धानदूषितान्.

टिप्प०—1 'वा-शब्दोऽत्र प्रथमोऽत्यन्तान्यसंयोगवारणाय, अन्यस्तु समुच्चये । तदीया शांभवी जलमयी जलप्रधाना मूर्तिरष्टमूर्तिमध्ये जलस्य पठितत्वात्' इति बाल० ।

विभूतिभिः शौर्यसंपत्तिभिः सुरबन्दीनां वेणीर्मोक्ष्यते विस्रंसयिष्यति। तारकासुरं हनिष्यतीति भावः ॥ ६१ ॥

इति व्याहृत्य विबुधान्विश्वयोनिस्तिरोदधे ।
मनसाहितकर्तव्यास्तेऽपि देवा दिवं ययुः ॥ ६२ ॥

इतीति ॥ विश्वस्य योनिः कारणम् । 'योनिः स्त्रीणां स्थानभेदे कारणे ताम्रिके पणे' इति वैजयन्ती । विबुधान्सुरानिति व्याहृत्याभिधाय तिरोदधेऽन्तर्हितवान् । ते देवा अपि मनस्याहितं कर्तव्यं यैस्तै तथोक्ताः सन्तो दिवं स्वर्गं ययुः प्रापुः ॥ ६२ ॥

तत्र निश्चित्य कंदर्पमगमत् पाकशासनः ।
मनसा कार्यसंसिद्धौ त्वराद्विगुणरंहसा ॥ ६३ ॥

तत्रेति ॥ पाको नाम कश्चिदसुरस्तस्य शासन इन्द्रस्तस्य हरचित्ताकर्षणकृत्ये कंदर्पं निश्चित्य, साधकत्वेनेति शेषः। कार्यसंसिद्धौ त्वरयौत्सुक्येन द्वौ गुणौ यस्य तद्विगुणं द्विरावृत्तं रंहो वेगो यस्य तेन तथोक्तेन । 'गुणस्तु वृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती । मनसाऽगमत्, सस्मारेत्यर्थः । गमेर्लुङ् । लृदित्त्वाच्च्लेरङादेशः ॥ ६३ ॥

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥ ६४ ॥

अथेति ॥ अथ स्मरणानन्तरम्, स स्मृत इत्यर्थः । पुष्पं धनुर्यस्य स पुष्पधन्वा कामः । 'वा संज्ञायाम्' (पा. ५।४।१३३) इत्यानङ् । 'ललितं त्रिषु सुन्दरम्' इत्यमरः । ललितायाः सुन्दर्या योषितो भ्रुवौ लते[1] इव चारुणी शृङ्गे कोटी यस्य तत्तथोक्तं चापम् । रतिः स्मरप्रिया । 'रतिः स्मरप्रिया' इत्यमरः । तस्या वलयपदानि

पाठा०—१ प्रति. २ कर्मसंसिद्धि; कार्यसंसिद्ध्यै; कार्यसंसिद्धित्वरा. ३ सुललित. ४ शार्ङ्गम्. ५ पुष्पकेतुः.

टिप्प०—1 'अत्र लता-शब्दः प्राशस्त्यवचनः; अन्यथा भ्रू-शब्दग्रहणेनैव सिद्धे लताशब्दस्याचारितार्थ्यं स्यात्' इति बाल० ।

कङ्कणस्थानान्यङ्कश्चिह्नं यस्य स तथोक्ते कण्ठ आसज्य लगयित्वा । चापकण्ठविशेषणाभ्यां शृङ्गारैकनिधेस्त्रिभुवनैकवीरस्य शृङ्गारवीरोपकरणेषु तुल्यरसत्वं व्यज्यते। सहचरस्य सख्युर्मधोर्वसन्तस्य हस्ते न्यस्तं चूताङ्कुरमेवास्त्रं यस्य स तथोक्तः प्राञ्जलिः कृताञ्जलिः सन् । शतमखमिन्द्रमुपतस्थे संगतवान् । संगतिकरणार्थादात्मनेपदम् । अत्र स्वभावोक्तिः, 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' इति । मालिनीवृत्तमेतत्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ६४ ॥

इति श्रीमन्महोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये ब्रह्मसाक्षात्कारो नाम द्वितीयः सर्गः ।

---

## तृतीयः सर्गः ।

तस्मिन्मघोनस्त्रिदशान्विहाय सहस्रमक्ष्णां युगपत्पपात ।
प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥

तस्मिन्निति ॥ मघोन इन्द्रस्याक्ष्णां सहस्रं त्रिरावृत्ता दश परिमाणमेषामिति त्रिदशान्देवान् । 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' (पा. २।२।२५) इति बहुव्रीहिः । 'बहुव्रीहौ संख्येये–' (पा. ५।४।७३) इति डच्प्रत्ययः । उक्तार्थत्वात्सुचो निवृत्तिः । विहाय त्यक्त्वा तस्मिन्कामे युगपत्पपात । सहस्रेणाक्षिभिरद्राक्षीदित्यादरातिशयोक्तिः । ननु सुचिरपरिचितानेकसुरपरित्यागेन भगवतो महेन्द्रस्य कथमकाण्डे तस्मिन्नेकस्मिन्पक्षपात इत्याशङ्क्यार्थान्तरं न्यस्यति—प्रायो भूम्ना प्रभूणामाश्रितेषु सेवकेषु विषये गौरवमादरः प्रयोजनापेक्षितया कार्यार्थित्वेन हेतुना चलं चञ्चलम् । फलतन्त्राः प्रभवः, न तु गुणतन्त्रा इति भावः ॥ १ ॥

स वासवेनासनसंनिकृष्टमितो निषीदेति विसृष्टभूमिः[1] ।
भर्तुः प्रसादं प्रतिनन्द्य[2] मूर्ध्ना वक्तुं मिथः प्राक्रमतैवमेनम् २

स इति ॥ स कामो वासवेनेन्द्रेणासनस्य सिंहासनस्य संनिकृष्टं संनिहितमासनसंनिकृष्टं यथा तथा । शेषषष्ठ्यायं समासः । कृद्योगलक्षणया तु न; 'न

---

पाठा०—१ निसृष्ट. २ प्रतिवन्द्य.

लोकाव्ययनिष्ठाखलर्थतृनाम्' (पा. २।३।६९) इति षष्ठीनिषेधात् । इतो निषीदेहोपविशेति विसृष्टभूमिर्दत्तावकाशः सन् । भर्तुः स्वामिनः प्रसादमनुग्रहं मूर्ध्ना प्रतिनन्द्य संभाव्य मिथो रहसि । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । पुनमिन्द्रमेवं वक्ष्यमाणप्रकारेण वक्तुं प्राक्रमतोपक्रान्तवान् । 'प्रोपाभ्यां समर्थाभ्याम्' (पा. १।३।४२) इत्यात्मनेपदम् ॥ २ ॥

आज्ञापय ज्ञातविशेष ! पुंसां लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितमाज्ञया ते ॥ ३ ॥

आज्ञापयेति ॥ हे पुंसां ज्ञातविशेष ज्ञातसार ! ज्ञातपुंविशेषेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । आज्ञापय, तदिति शेषः । उत्तरवाक्ये यच्छब्दप्रयोगान्न पूर्ववाक्ये तच्छब्दप्रयोगनिर्बन्धः । किं तदित्याह—लोकेषु ते तव यत्करणीयं कर्तव्यमस्ति । संस्मरणेन प्रवृत्तमुत्पन्नं ते तवानुग्रहं प्रसादमाज्ञया नियोगेन संवर्धितं वृद्धिं गमितमिच्छामि । संस्मरणकृतमनुग्रहं केनचिन्नियोगेन वर्धय, क्वचित्कर्मणि नियुङ्क्ष्वेत्यर्थः । अन्यथा मे नास्ति परितोष इति भावः । तुमुन्नन्तपाठे णिजर्थे यत्नः कार्यः ॥ ३ ॥

न च मे किंचिदसाध्यमस्तीत्याह—

केनाभ्यसूया पदकाङ्क्षिणा ते नितान्तदीर्घैर्जनिता तपोभिः ।
यावद्भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्ती ॥ ४ ॥

केनेति ॥ पदकाङ्क्षिणा स्वाराज्यकामेन केन पुंसा नितान्तदीर्घैरतिप्रभूतैस्तपोभिस्ते तवाभ्यसूयेर्ष्या जनिता ? तं ब्रूहीति शेषः । किमर्थम् ? यावद्यतः स भवद्वैरी । अहितसायकस्य संहितबाणस्यास्य मत्कार्मुकस्य निदेशे वर्तत इति निदेशवर्त्याज्ञावशो भवति, अविलम्बेनैव भविष्यतीत्यर्थः । 'वर्तमानसामीप्ये वर्तमानवद्वा' (पा. ३।३।१३१) इति लट् ॥ ४ ॥

संप्रति चतुर्वर्गे मोक्षमधिकृत्याह—

असंमतः कस्तव मुक्तिमार्गं पुनर्भवक्लेशभयात्प्रपन्नः ।
बद्धश्चिरं तिष्ठतु सुन्दरीणामारेचितभ्रूचतुरैः कटाक्षैः ॥ ५ ॥

असंमत इति ॥ तवासंमतः कः ? पुनर्भवः पुनरुत्पत्तिः, संसार इति

पाठा०—१ संवर्धितुम्. २ फलकाङ्क्षिणा. ३ आरोपितः. ४ विलासैः.
४ कु० सं०

यावत् । तत्र ये क्लेशा जन्मजरामरणादयस्तेभ्यो भयान्मुक्तिमार्गं प्रपन्नस्तं वद । यतः सोऽप्यारेचिताभिरेकैकशो विवर्तिताभिर्भ्रूभिश्चतुरैः सुन्दरीणां कटाक्षैर्बद्धश्चिरं तिष्ठतु । आरेचितलक्षणं तु-'स्याद्भ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम् । तयोर्मूलसमुत्क्षेपं कौटिल्याद्भ्रूकुटिं विदुः ॥ इति ॥ ५ ॥

धर्मार्थावधिकृत्याह—

अध्यापितस्योशनसापि नीतिं प्रयुक्तरागप्रणिधिर्[1]द्विषस्ते ।
कस्यार्थधर्मौ वद पीडयामि सिन्धोस्तटावोघ इव प्रवृद्धः ॥६॥

अध्यापितस्येति ॥ उशनसा शुक्रेण नीतिं नीतिशास्त्रमध्यापितस्यापि । 'अपि'शब्दाच्छुक्रशिष्याणामप्रधृष्यत्वं गम्यते । 'गतिबुद्धि–' (पा. १।४।५२) इत्यादिना द्विकर्मकादिङ्धातोर्ण्यन्तात्प्रधाने कर्मणि क्तः । 'अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः' इति वचनात् । ते द्विषस्तव शत्रोः कस्यार्थधर्मौ प्रयुक्तः प्रहितो रागो विषयाभिलाष एव प्रणिधिर्दूतो येन सोऽहम् । 'प्रणिधिः प्रार्थने चरे' इति यादवः । प्रवृद्ध ओघः प्रवाहः सिन्धोर्नद्यास्तटाविव पीडयामि ? वद ॥ ६ ॥

काममधिकृत्याह—

कामेकपत्नीव्रतदुःखशीलां लोलं मनश्चारुतया प्रविष्टाम् ।
नितम्बिनीमिच्छसि मुक्तलज्जां कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥ ७॥

कामिति ॥ एकः पतिर्यस्याः सैकपत्नी पतिव्रता । 'नित्यं सपत्न्यादिषु' (पा. ४।१।३५) इति ङीप् । तस्या व्रतं पातिव्रत्यं तेन दुःखशीलां दुःखस्वभावाम्, दृढव्रतामित्यर्थः । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । चारुतया सुन्दरत्वेन हेतुना लोलं मनस्त्वच्चित्तं प्रविष्टां कां नितम्बिनीं मुक्तलज्जां सतीं कण्ठे स्वयंग्राहनिषक्तबाहुम् । स्वयं गृह्णातीति स्वयंग्राहा । 'विभाषा ग्रहः' (पा. ३।१।१४३) इति णप्रत्ययः । न च जलचर एव ग्राह इति नियमः । जलचरे ग्राह एवेति नियमादिति । स्वयंग्राहा च सा निषक्तबाहुश्च तां तथाभूतामिच्छसि, त्वदर्थे पतिव्रतामपि व्रताद्भ्रंशयिष्यामीत्यर्थः । एतच्चेन्द्रस्य पारदारिकत्वादुक्तम् । तथा च श्रुतिः—'अहल्यायै जारः' इति ॥ ७ ॥

---

पाठा०—१ प्रणिधे.

त्रिविधा नायिका स्वकीया परकीया साधारणी चेति । तत्र परकीयां प्रत्युक्तम् । इतरे प्रत्याह—

**कयासि कामिन्! सुरतापराधात्पादानतः कोपनयावधूतः ।**
**यस्याः करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम् ॥ ८ ॥**

कयेति ॥ हे कामिन्कामुक! सुरतापराधात्, अन्यासङ्गादित्यर्थः । पादानतः प्रणतः सन् । कोपनया कोपनशीलया कया स्त्रियावधूतस्तिरस्कृतोऽसि? तस्याः शरीरं दृढानुतापं गाढपश्चात्तापमत एव प्रवालशय्याशरणं करिष्यामीति ॥ ८ ॥

**प्रसीद विश्राम्यतु वीर! वज्रं शरैर्मदीयैः कतमः सुरारिः ।**
**बिभेतु मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ९**

प्रसीदेति ॥ हे वीर! प्रसीद प्रसन्नो भव । वज्रं कुलिशं विश्राम्यतु, उदास्तामित्यर्थः । मदीयैः शरैर्मोघीकृतबाहुवीर्यो विफलीकृतभुजशक्तिः कतमो दैत्यदानवादिषु यः कश्चन सुरारिः । 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा. ५।३।९३) इति डतमच्प्रत्ययः । कोपेन स्फुरिताधराभ्यः स्त्रीभ्योऽपि बिभेतु, किमु वक्तव्यं पुंभ्य इत्यर्थः । सकृद्भीतः सर्वतो बिभेतीति भावः । 'भीत्रार्थानां भयहेतुः' (पा. १।४।२५) इत्यपादानत्वात् पञ्चमी ॥ ९ ॥

**तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।**
**कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥१०॥**

तवेति ॥ किं बहुना, तव प्रसादादनुग्रहात् कुसुमायुधोऽप्यतिदुर्बलास्त्रोऽप्यहमेकं मधुं वसन्तमेव सहायं लब्ध्वा पिनाकः पाणौ यस्य स पिनाकपाणिः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' (वा. १४२५) तस्य हरस्यापि । हरः पिनाकी चेत्यतिदारुण इति भावः । धैर्यच्युतिं धैर्यहानिं कुर्याम्, कर्तुं शक्नुयामित्यर्थः । 'शकि लिङ् च' (पा. ३।३।१७२) इति शक्यार्थे लिङ् । अन्ये धन्विनो धनुर्भृतो मम के, न केऽपीत्यर्थः । 'किं'शब्दः कुत्सायाम् । 'कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते' इति शाश्वतः ॥ १० ॥

---

पाठा०—१ सहसापराधात्. २ तस्याः.

अथोरुदेशादवतार्य पादमाक्रान्तिसंभावितपादपीठम् ।
संकल्पितार्थे विवृतात्मशक्तिमाखण्डलः काममिदं बभाषे ॥११॥

अथेति ॥ अथ स्मरवाक्यश्रवणानन्तरमाखण्डलः सहस्राक्ष ऊरुदेशात्पादमाक्रान्त्याऽऽक्रमणेन संभावितं पादपीठं यस्मिंस्तद्यथा तथावतार्य संकल्पितार्थे हरचित्ताकर्षणरूपे विषये विवृतात्मशक्तिम् । 'कुर्यां हरस्यापि–' (३।१०) इत्यादिना प्रकटीकृतस्वसामर्थ्यं कामं स्मरमिदं वक्ष्यमाणं बभाषे ॥ ११ ॥

सर्वं सखे! त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवांश्च ।
वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥१२॥

सर्वमिति ॥ हे सखे! 'सखे' इति संबोधनं गौरवार्थम् । सर्वमेतत्त्वय्युपपन्नं सिद्धम् । मम कुलिशं वज्रं भवांश्चोभे अस्त्रे, तत्र वज्रं तपोवीर्येण तपोबलेन महत्सु प्रबलेषु कुण्ठं प्रतिबद्धप्रसरम्; त्वमस्त्रं सर्वतोगामि च साधकं च, तापसेष्वप्यकुण्ठमित्यर्थः ॥ १२ ॥

अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ॥ १३ ॥

अवैमीति ॥ हे सखे! ते सारं बलमवैमि वेद्मि; अतः खल्वत एवात्मसमं मत्तुल्यं त्वां गुरुणि महति कार्ये 'तस्मै हिमाद्रेः—'(३।१६) इति वक्ष्यमाणे नियोक्ष्ये । 'स्वराद्यन्तोपसर्गादिति वक्तव्यम्' (वा. ९३९) इति वार्तिकादात्मनेपदनियमः । तथा हि–सारपरीक्षापूर्वक एव सर्वत्र नियोग इत्याह—कृष्णेन विष्णुना । धरतीति धरः । पचाद्यच् । भुवो धरो भूधरस्तस्य भावस्तत्तां भूधरताम्, भूधरणशक्तिमित्यर्थः । अवेक्ष्य ज्ञात्वा । शेषः सर्पराजो देहोद्वहनाय स्वदेहमुद्वोढुम् । 'क्रियार्थोपपदस्य–' (पा.२।३।१४) इत्यादिना चतुर्थी । व्यादिश्यते नियुज्यते । शेषशायी हि भगवान् ॥ १३ ॥

नियोगाङ्गीकारं सिद्धवत्कर्तुमाह—

आशंसता बाणगतिं वृषाङ्के कार्यं त्वया नः प्रतिपन्नकल्पम् ।
निबोध यज्ञांशभुजामिदानीमुच्चैर्द्विषामीप्सितमेतदेव ॥ १४ ॥

आशंसतेति ॥ वृषाङ्के हरे बाणगतिं बाणप्रसरमाशंसता कथयता । 'कुर्यां

पाठा०—१ अक्रान्ति. २ संकलिपतेऽर्थे. ३ यज्ञाङ्ग. ४ अर्थमंत्रम्.

हरस्यापि पिनाकपाणेः' (३।१०) इत्यादिनेति शेषः। त्वया नोऽस्माकं कार्यं प्रतिपन्नकल्पमङ्गीकृतप्रायम्। 'ईषदसमाप्तौ–' (पा.५।३।६७) इत्यादिना कल्पप्प्रत्ययः। कथमेतदत आह—इदानीमुच्चैरुन्नता द्विषो येषां तेषामुच्चैर्द्विषां यज्ञांशभुजां देवानाम्। एतेन द्विषल्लुप्तयज्ञभागत्वं सूच्यते। ईप्सितमाप्तुमिष्टमेतदेव हरे बाणप्रयोगरूपमेव निबोध, हरायत्तं बुध्यस्वेत्यर्थः। 'बुध बोधने' इति धातोर्लोट्। अत्र 'आशंसता प्रार्थयमानेन' इति नाथव्याख्यानमनाथव्याख्यानम्। आङ्पूर्वयोः शास्तिशंसत्योरिच्छार्थत्वे आत्मनेपदनियमात्, याञ्चार्थत्वस्याप्रामाणिकत्वात्, 'कुर्यां हरस्यापि—' (३।१०) इत्यत्रानयोरभावादयोगाच्चेति ॥ १४ ॥

किं तत्कार्यं, कथं वा तस्य हरायत्तत्वं, कुतो वा मदपेक्षेत्यत्राह—

**अमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवाः।**
**स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥१५॥**

अमी इति ॥ हि यस्मादमी देवा जयाय शत्रुजयार्थं भवस्य हरस्य वीर्यप्रभवं तेजःसंभूतं सेनान्यं सेनापतिमुशन्ति कामयन्ते। 'वश कान्तौ' इति धातोर्लट्। ब्रह्मणां सद्योजातादिमन्त्राणामङ्गानां हृदयादिमन्त्राणां भूः स्थानं ब्रह्माङ्गभूः, कृतमन्त्रन्यास इत्यर्थः। ब्रह्मणि निजतत्त्वे 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा' इत्युभयत्राप्यमरः। योजितात्मा नियमितचित्तः, मन्त्रन्यासपूर्वकं ब्रह्म ध्यायन्नित्यर्थः। स भवश्च त्वदेकेषोस्तवैकबाणस्य निपातेन साध्यः, अनन्यसाध्योऽयमस्मिन्नवसर इति भावः ॥ १५ ॥

**तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व।**
**योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥१६॥**

तस्मा इति ॥ यतात्मने नियतचित्ताय तस्मै भवाय। 'रुच्यर्थानां प्रीयमाणः' (पा.१।४।३३) इति संप्रदानत्वाच्चतुर्थी। प्रयतां हिमाद्रेस्तनूजां पार्वतीं रोचयितुं यतस्व। भवितव्यं चात्र पार्वत्यैवेत्याह—योषित्सु स्त्रीषु मध्ये। 'यतश्च निर्धारणम्' (पा.२।३।४१) इति सप्तमी। क्षमा शक्ता तस्य हरस्य वीर्यं रेतस्तस्य निषेकः क्षरणं तस्य भूमिः क्षेत्रं सा पार्वत्येवेत्यात्मभुवा ब्रह्मणोपदिष्टम्। 'उभे एव क्षमे वोढुम्' (२।६०) इत्यादिनोक्तमित्यर्थः ॥ १६ ॥

---

पाठा०—१ ब्रह्मनियोजितात्मा. २ जितात्मने. ३ योजयितुं.

सापीदानीं संनिकृष्टैव तस्येत्याह—

**गुरोर्नियोगाच्च नगेन्द्रकन्या स्थाणुं तपस्यन्तमधित्यकायाम् ।**
**अन्वास्त इत्यप्सरसां मुखेभ्यः श्रुतं मया मत्प्रणिधिः स वर्गः १७**

गुरोरिति ॥ नगेन्द्रकन्या पार्वती च गुरोः पितुर्नियोगाच्छासनादधित्यकायां हिमाद्रेरूर्ध्वभूमौ । 'भूमिरूर्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' (पा. ५।२।३४) इति त्यकन्प्रत्ययः । तपस्यन्तं तपश्चरन्तम् । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' (पा. ३।१।१५) इति क्यङ्प्रत्ययः, ततः शतृप्रत्ययः । स्थाणुं रुद्रमन्वास्ते, उपास्त इत्यर्थः । इतीदं मयाप्सरसां मुखेभ्यः श्रुतम् । न चैतदैतिह्यमात्रमित्याह—स वर्गः सोऽप्सरसां गणो मत्प्रणिधिर्मम गूढचरः । 'प्रणिधिः प्रार्थने चरे' इति यादवः ॥ १७ ॥

**तद्गच्छ सिद्धै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव ।**
**अपेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः ॥ १८ ॥**

तदिति ॥ तत्तस्मात्सिद्ध्यै कार्यसिद्ध्यर्थं गच्छ देवकार्यं कुरु। आशिषि लोट्। अयमर्थः प्रयोजनमर्थान्तरभाव्यः कारणान्तरसाध्य एव; तच्च कारणान्तरं पार्वतीसंनिधानमिति भावः । 'अर्थः प्रकारे विषये वित्तकारणवस्तुषु । अभिधेये च शब्दानां वृत्तौ चापि प्रयोजने ॥' इति विश्वः । तथापि बीजसाध्योऽङ्कुरो बीजाङ्कुर उदयादुत्पत्तेः प्रागम्भ इव त्वामुत्तमं प्रत्ययं चरमं कारणमपेक्षते । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । तस्मादस्मिन्नर्थे तव चरमसहकारित्वादनन्यसाध्योऽयमर्थं इति भावः ॥ १८ ॥

**तस्मिन्सुराणां विजयाभ्युपाये तवैव नामास्त्रगतिः कृती त्वम् ।**
**अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म ॥ १९ ॥**

तस्मिन्निति ॥ सुराणां विजयाभ्युपाये जयस्योपायभूते तस्मिन्हरेऽस्त्रगतिरस्त्रप्रसरस्तवैव नाम । 'नाम' इति संभावनायाम् । अन्येषां तु संभावनापि नास्तीति भावः । अतस्त्वं कृती कृतमस्यास्तीति कृती कृतार्थः । तथा हि—अप्रसिद्धमप्यनन्यसाधारणमेव कर्म पुंसां यशसे हि; इदं तु प्रसिद्धमसाधारणं चेत्यतियशस्करमिति भावः ॥ १९ ॥

---

पाठा०—१ अध्यास्त. २ लभ्य. ३ प्रत्ययसङ्गलब्धौ. ४ अस्मिन्. ५ काम.

प्रोत्साहनार्थं स्तौति—

**सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम् ।**
**चापेन ते कर्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः ॥ २० ॥**

सुरा इति ॥ एते सुराः समभ्यर्थयितारो याचितारः । कार्यं प्रयोजनं त्रयाणां विष्टपानामपि संबन्धि, सर्वलोकार्थमित्यर्थः । कर्म ते तव चापेन, न त्वन्यैनेति भावः । अतिहिंस्रमतिघातुकं च न । 'अहो बत' इति संबोधने । 'अहो बतानुकम्पायां खेदे संबोधनेऽपि च' इति विश्वः । अथवा अहो आश्चर्ये । 'बत' इत्यामन्त्रणे संतोषे चेति । 'बतामन्त्रणसंतोषखेदानुक्रोशविस्मये' इति विश्वः । स्पृहणीयवीर्योऽस्याश्चर्यविक्रमोऽसि । 'आश्चर्यं स्पृहणीयं च' इति नानार्थकोशः ॥ २० ॥

**मधुश्च ते मन्मथ ! साहचर्यादसावनुक्तोऽपि सहाय एव ।**
**समीरणो नोदयिता[1] भवेति व्यादिश्यते केन हुताशनस्य ॥ २१ ॥**

मधुरिति ॥ हे मन्मथ ! असौ मधुश्च वसन्तोऽपि ते साहचर्यात्सहचरत्वादेवानुक्तोऽप्यप्रेरितोऽपि सहायः सहकार्येव । तथा हि—समीरणो वायुर्हुताशनस्याग्नेर्नोदयिता प्रेरको भवेति केन व्यादिश्यते ? अत्र मधुसमीरणयोरुक्तिमन्तरेण सहायताकरणं सामान्यधर्मः । स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथङ्गिर्दिष्ट इति प्रतिवस्तूपमालंकारोऽयम्[1] । तदुक्तम्—"यत्र सामान्यनिर्देशः पृथग्वाक्यद्वये यदि । गम्यौपम्याश्रिता सा स्यात्प्रतिवस्तूपमा मता ॥" इति ॥ २१ ॥

**तथेति शेषामिव[2] भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे ।**
**ऐरावतास्फालनकर्कशेन[3] हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥ २२ ॥**

---

पाठा०—१ समीरणश्चोदयिता; समीरणः प्रेरयिता. २ मालामिव. ३ दिग्वारणा.

टिप्प०—1 विवरणकारास्तु 'उपमायां तु पदार्थयोः साम्यम्, तच्च वाच्यम्, अत्र (प्रतिवस्तूपमायां) तु वाक्यार्थयोः; तदपि गम्यमेवेति ततो भेदः । साम्यप्रतिपादकानां इवादीनां पदत्वेन तैः पदार्थयोरेव साम्यं बोध्यते "पदार्थः पदार्थेनान्वेति" इति नियमात्' इत्याहुः ।

तथेति ॥ तथास्त्विति भर्तुः स्वामिनः शेषामिव[1] प्रसाददत्तां मालामिव । 'प्रसादान्निजनिर्माल्यदाने शेषेति कीर्तिता' इति विश्वः । 'माल्याक्षतादिदाने स्त्री शेषा' इति वैजयन्ती-केशवौ । आज्ञां मूर्ध्नादाय शिरसा गृहीत्वा मदनः प्रतस्थे । 'समवप्रविभ्यः स्थः' (पा. १।३।२२) इत्यात्मनेपदम् । इन्द्र ऐरावतास्फालनेन प्रोत्साहनार्थेन ताडनेन कर्कशेन परुषेण हस्तेन तदङ्गं मदनदेहं पस्पर्श, हस्तस्पर्शेन संभावयामासेत्यर्थः । 'शेषामिवाज्ञाम्' इत्यत्र साधकबाधकप्रमाणाभावादुपमोत्प्रेक्षयोः संदेहसंकर इति । यदि भर्त्रा शेषापि दत्ता तदा तामाज्ञामिवेत्युपमा । अथ न दत्ता तर्हि शेषात्वेनोत्प्रेक्षिता । शेषादानं तु संदिग्धमिति ॥२२॥

**स माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः ।**
**अङ्गव्ययप्रार्थितकार्यसिद्धिः[1] स्थाण्वाश्रमं हैमवतं जगाम ॥ २३ ॥**

स इति ॥ स मदनोऽभिमतेन प्रियेण सख्या सुहृदा माधवेन वसन्तेन रत्या स्वदेव्या च साशङ्कं 'अतिसंकटमापतितम्' इति सभयमनुप्रयातः सन् । तथाङ्गस्य व्ययेनापि प्रार्थिता कार्यसिद्धिर्येन स तथोक्तः, शीर्त्वा मृत्वापि सर्वथा देवकार्यं साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः । हैमवतं हिमवति भवं स्थाणो रुद्रस्याश्रमं जगाम ॥ २३ ॥

**तस्मिन्वने संयमिनां मुनीनां तपःसमाधेः प्रतिकूलवर्ती[2] ।**
**संकल्पयोनेरभिमानभूतमात्मानमाधाय[3] मधुर्जजृम्भे ॥ २४ ॥**

तस्मिन्निति ॥ तस्मिन्वने स्थाण्वाश्रमे संयमिनां समाधिमतां मुनीनां तपसः समाधेरेकाग्रतायाः प्रतिकूलं वर्तत इति प्रतिकूलवर्ती विरोधी मधुर्वसन्तः संकल्पयोनेर्मनोभवस्याभिमानभूतम्, गर्वहेतुभूतमित्यर्थः । कार्यकारणयोरभेदोपचारः । आत्मानं निजं स्वरूपमाधाय संनिधाय जजृम्भे प्रादुर्बभूव, वसन्तधर्मान्प्रवर्तयामासेत्यर्थः ॥ २४ ॥

---

पाठा०—१ कर्मसिद्धिः. २ तपःसमाधिप्रतिकूलवर्ती. ३ आदाय.

---

टिप्प०—1 बालबोधिनीकारस्तु 'मालां' इति पाठमावृत्य 'शिरसा मालामिव मालेव माल्यं मंगलार्थं प्रसन्नस्रजमलंकारतामप्युपादायेत्यर्थः । प्रयाणकाले हि मंगलार्थं माला दीयते इति शिष्टाचारः' इत्याह ।

वसन्तधर्मानाह—

कुबेरगुप्तां[1] दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज ॥ २५ ॥

कुबेरेति ॥ उष्णरश्मौ सूर्ये साहसिके च नायके समयं दक्षिणायनकालं संगमकालं च विलङ्घ्याकाण्डे व्यतिक्रम्य कुबेरगुप्तां धनपतिपालितां कुत्सितशरीरेण केनचिद्रक्षितां च । दिशमुदीचीं[1] स्त्रीलिङ्गाक्षिप्तां कांचिन्नायिकां च । गन्तुं चलितुं संगन्तुं च प्रवृत्ते सति दक्षिणा दिग्दाक्षिण्यवती नायिका च मुखेनाग्रभागेण वक्त्रेण च । वहतीति वहः । पचाद्यच् । गन्धस्य वहं गन्धवहमनिलं व्यलीकेन दुःखेन निश्वासस्तं व्यलीकनिश्वासमिव । 'दुःखे वैलक्ष्ये व्यलीकमप्रियाकार्यवस्तुनोः' इति वैजयन्ती । उत्ससर्ज प्रवर्तयामास । स्वभर्तरि समयोल्लङ्घनेन पराङ्गनासंगतिं प्रवृत्ते सति स्त्रियो दाक्षिण्यादकिंचिद्वदा दुःखान्निश्वसन्तीति भावः । उत्तरायणे सति मलयानिलाः प्रवृत्ता इति वाक्यार्थः । अत्रोत्प्रेक्षालंकारः । न च समासोक्तिरेवेयमुत्प्रेक्षानुप्रविष्टेति शङ्कितव्यम् । केवलविशेषणसामर्थ्यादेवाप्रस्तुतप्रतीतौ सोत्तिष्ठते; अत्र तु दक्षिणेति विशेष्यसामर्थ्यादपि नायिका प्रतीयते । न च श्लेष एव प्रकृताप्रकृतविषयः, उभयश्लेषे श्लिष्टविशेष्यानङ्गीकारात् । तस्माच्छब्दशक्तिमूलोऽयं ध्वनिः । स च व्यलीकनिश्वासरूपचेतनधर्मसंभावनार्थं दक्षिणस्या दिशो नायिकया सहाभेदमासादयन्नभेदलक्षणातिशयोक्त्युपजीविनीं निश्वासमिवेति वाच्योत्प्रेक्षां निर्वहतीति वाच्यसिद्ध्यङ्गभूत इत्युत्पश्यामः ॥ २५ ॥

असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां संपर्कमासिञ्जितनूपुरेण ॥ २६ ॥

असूतेति ॥ अशोको वृक्षविशेषः, सद्यः स्कन्धात्प्रकाण्डात्प्रभृत्येव, स्कन्धादारभ्येत्यर्थः । भाष्यकारवचनात्प्रभृतियोगे पञ्चमीति कैयटः । भाष्यं च 'मूलात्प्रभृत्यग्राद्वृक्षांस्तक्षणुवन्ति' इति 'कार्तिक्याः प्रभृत्याग्रहायणी मासे'

---

पाठा०—१ जुष्टाम्, नाथाम्.

टिप्प०—1 'वसन्ते हि रविरुदीचीं गच्छति, तदा तु दक्षिणायनत्वात् समयाभावः' इति बाल० ।

इत्यादि । सपल्लवानि कुसुमान्यसूत, उभयमप्यजीजनदित्यर्थः । आसिञ्जितो नूपुरो यस्य तेन । सिञ्जधातोरकर्मकात् 'गत्यर्थाकर्मक–' (पा. ३।४।७२) इत्यादिना कर्तरि क्तः । सुन्दरीणां पादेन संपर्कं ताडनं नापैक्षत । 'सनूपुररवेण स्त्रीचरणेनाभिताडनम् । दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत् ॥' इति । तथा हि— 'पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः । आलोकितः कुरबकः कुरुते विकासमालोडितस्तिलक उत्कलिको विभाति' इति ॥२६॥

**सद्यः प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे ।**
**निवेशयामास मधुर्द्विरेफान्नामाक्षराणीव मनोभवस्य ॥ २७ ॥**

सद्य इति ॥ मधुर्वसन्त एवेषुकारः प्रवालोद्गमाः पल्लवाङ्कुरा एव चारूणि पत्राणि पक्षा यस्य तस्मिन् । 'पत्रं वाहनपक्षयोः' इत्यमरः । नवं चूतं चूतकुसुमं तदेव बाणस्तस्मिन्नवचूतबाणे समाप्तिं नीते सति सद्यो मनोभवस्य धन्विनो नामाक्षराणीव द्विरेफान्भ्रमरान्निवेशयामास निदधौ । अत्र 'प्रवालपत्रे' इत्याद्येकदेशविवर्तिरूपकं मधोरिषुकारत्वरूपं यन्नामाक्षराणीवेत्युत्प्रेक्षायां निमित्तमित्येकदेशविवर्तिरूपकोत्थापितेयमुत्प्रेक्षा ॥ २७ ॥

**वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः ।**
**प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥२८॥**

वर्णेति ॥ कर्णिकारं कर्णिकारकुसुमम् । 'अवयवे च प्राण्योषधिवृक्षेभ्यः' (पा. ४।३।१३५) इत्युत्पन्नस्य तद्धितस्य 'पुष्पमूलेषु बहुलम्' (वा. २९५०) इति लुक् । एवमन्यत्रापि द्रष्टव्यम् । वर्णप्रकर्षे वर्णोत्कर्षे सत्यपि निर्गन्धतया हेतुना चेतो दुनोति स्म पर्यतापयत् । 'लट् स्मे' (पा. ३।२।११८) इति भूतार्थे लट् । तथा हि—प्रायेण विश्वसृजो विधातुः प्रवृत्तिर्गुणानां सामग्र्यविधौ साकल्यसंपादनविषये पराङ्मुखी । सर्वत्रापि वस्तुनि किंचिद्वैकल्यं संपादयति, यथा चन्द्रे कलङ्कः । अतः कर्णिकारेऽपि नैर्गन्ध्यं युज्यत इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः ॥ २८ ॥

---

पाठा०— १ सख्युः. २ निगन्धमिति.

---

टिप्प०—1 'शरा हि स्वामिनामाङ्किता भवन्ति । मनोभवस्येति काकाक्षिगोलकन्यायेनोभयत्र संबन्धः' इति बाल० ।

**बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि ।**
**सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥२९॥**

**बालेन्द्विति** ॥ अविकासभावान्निर्विकासत्वान्मुकुलभावाद्धेतोर्बालेन्दुरिव वक्राण्यतिलोहितान्यतिरक्तानि पलाशानि किंशुकपुष्पाणि। 'पलाशे किंशुकः पर्णः' इत्यमरः। वसन्तेन पुंसा समागतानां संगतानां वनस्थलीनां स्त्रीणां सद्यः सद्योदत्तानि, पुराणेष्वतिलौहित्याभावादिति भावः। नखक्षतानीव बभुः। अत्र वसन्तस्य वनस्थलीनां च विशेषणसाधारण्यान्नायकव्यवहारप्रतीतेः समासोक्तिस्तावदस्ति । 'नखक्षतानीव' इति जातिस्वरूपोत्प्रेक्षा वक्रत्वलौहित्यगुणनिमित्ता जागर्ति। सा च नायकव्यवहाराश्रितसमासोक्तिगर्भिण्येवोत्तिष्ठत इत्युभयोरेककालतैव। 'विशेषणसामर्थ्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिष्यते' इति हि लक्षणम् ॥ २९ ॥

**लग्नद्विरेफाञ्जनभक्तिचित्रं मुखे मधुश्रीस्तिलकं प्रकाश्य[1] ।**
**रागेण बालारुणकोमलेन चूतप्रवालोष्ठमलंचकार ॥ ३० ॥**

**लग्नेति** ॥ मधुश्रीर्वसन्तलक्ष्मीर्लग्नद्विरेफा एवाञ्जनभक्तयः कज्जलरचनास्ताभिश्चित्रं चित्रवर्णं तिलकं पुष्पविशेषमेव तिलकं विशेषकम्। मुखं प्रारम्भस्तस्मिन्नेव मुखे वक्त्रे प्रकाश्य प्रकटय्य बालारुणकोमलेन बालार्कसुन्दरेण रागेणारुणिम्ना तेनेव लाक्षारागेण चूतप्रवाल एवोष्ठस्तं चूतप्रवालोष्ठमलंचकार प्रसाधयामास ॥ अत्र रूपकालंकारः[1] ॥ ३० ॥

**मृगाः प्रियालद्रुममञ्जरीणां[2] रजःकणैर्विघ्नितदृष्टिपाताः ।**
**मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ ३१ ॥**

**मृगा इति** ॥ प्रियालद्रुमा[2] राजादनवृक्षाः। 'राजादनः प्रियालः स्यात्' इत्यमरः। तेषां मञ्जर्यस्तासां रजःकणैर्विघ्निताः संजातविघ्ना दृष्टीनां पाताः प्रसादा येषां ते तथोक्ताः, मदोद्धता मृगाः प्रत्यनिलमनिलाभिमुखं मर्मरा मर्मर-

---

पाठा०—१ निवेश्य. २ प्रियालु; पियाल.

टिप्प०—1 'असूत सद्यः' (३।२६) इत्यत आरभ्यात्रावधि वसन्तर्तुहेतुभूतं स्थावराणां विकारं वर्णयामास कालिदासः। 2 इतःपरं वसन्तर्तुहेतुकं जङ्गमानां विकारं वर्णयति।

शब्दवन्तः पत्रमोक्षा जीर्णपर्णपाता यासु ता वनस्थलीर्विचेरुर्वनप्रदेशेषु चरन्ति स्म । 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' (इ० का०) इति चरतेः सकर्मकत्वम् ॥ ३१ ॥

**चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज ।**
**मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥ ३२ ॥**

**चूताङ्कुरेति** ॥ चूताङ्कुराणामास्वादेन कषायकण्ठो रक्तकण्ठः । 'रसभावपटौ रक्ते कषायः' इति केशवः । पुमान्कोकिलः पुंस्कोकिलः । पुंग्रहणं प्रागल्भ्यद्योतनार्थम् । 'मधुरं चुकूजे' इति यत्तत्कूजनमेव मनस्विनीनां मानविघाते रोषनिरासे दक्षं स्मरस्य वचनं 'मानं त्यजत' इत्याज्ञावचनं जातम्, कोकिलकूजितश्रवणानन्तरं स्मराज्ञया इव मानं जहुरित्यर्थः ॥ ३२ ॥

**हिमव्यपायाद्विशदाधराणामापाण्डरीभूतमुखच्छवीनाम्[1] ।**
**स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥ ३३ ॥**

**हिमेति** ॥ हिमस्य[1] व्यपायादपगमाद्विशदा नीरुजा अधरा ओष्ठा यासां तासामापाण्डरीभूतमुखच्छवीनाम्, कुङ्कुमपरिहारादिति भावः । किंपुरुषाङ्गनानां पत्रविशेषकेषु पत्ररचनासु स्वेदोद्गमः पदं चक्रे, वर्मोदयात्स्वेदोदयोऽभूदित्यर्थः । विशदाधरत्वं मधूच्छिष्टराहित्यादिति भावः । हेमन्तेषु नार्यो बिम्बोष्ठेषु मधूच्छिष्टं शीतभयाद्दधतीति प्रसिद्धम् ॥ ३३ ॥

**तपस्विनः स्थाणुवनौकसस्तामाकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।**
**प्रयत्नसंस्तम्भितविक्रियाणां कथंचिदीशा मनसां बभूवुः ॥ ३४ ॥**

**तपस्विन इति** ॥ स्थाणोर्वनमोको येषां ते तपस्विनस्तत्रत्या मुनयः । समाकाल आद्यन्तावस्या आकालिकी । अकालभवत्वादुत्पत्त्यनन्तरविनाशिनीमित्यर्थः । 'आकालिकडाद्यन्तवचने' (पा. ५।१।११४) इति समानकालादिकट्प्रत्ययः,

---

पाठा०—१ आपाण्डुरीभूत.

टिप्प०—1 'हिमेनोष्ठा अभिहता विकीर्णाश्च भवन्तीति प्रसिद्धम् । ननु आकस्मिकवसन्तप्रवृत्तेः पूर्वं कथं तुषारधर्मवर्णनम् ? सत्यम् ; पूर्वरूपक्षयमात्रेऽसमयत्वमभिधायानन्तरं सामान्यरूपेण वर्णनमित्यदोषः' इति बाल० ।

प्रकृतेराकाल आदेशश्च निपातितः। 'टिड्ढाणञ्–' (पा.४।१।१५) इत्यादिना ङीप्। केचिदकालाद्देहादध्यात्मादित्वाट्ठञर्थे ठगित्याहुः। तामाकालिकीं मधुप्रवृत्तिं वीक्ष्य प्रयत्नेन संस्तम्भितविक्रियाणां निरुद्धविकाराणां मनसां कथंचिदीशा नियन्तारो बभूवुः ॥ ३४ ॥

**तं देशमारोपितपुष्पचापे रतिद्वितीये मदने प्रपन्ने।**
**काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥ ३५ ॥**

तमिति ॥ आरोपितमधिज्यं कृतं पुष्पचापं येन तस्मिन्रतिर्द्वितीया यस्य तस्मिन्रतिसहाये मदने तं देशं स्थाण्वाश्रमं प्रपन्ने प्राप्ते सति, द्वन्द्वानि स्थावराणि जंगमानि च मिथुनानि, काष्ठोत्कर्षः। 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः। तां गतो यः स्नेह इष्टसाधननिबन्धनः प्रेमापरनामा ममताभिमानः। 'प्रेमा ना प्रियता हार्दं प्रेमः स्नेहः' इत्यमरः। स एव रसस्तेनानुविद्धं संपृक्तं भावं रत्याख्यं शृङ्गारभावं क्रियया कार्यभूतया चेष्टया विवव्रुः प्रकटीचक्रुः, शृङ्गारचेष्टाः प्रावर्तन्तेत्यर्थः ॥ ३५ ॥

ताश्चेष्टा आह 'मधु' इत्यादिभिश्चतुर्भिः—

**मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः।**
**शृङ्गेण च स्पर्श[1]निमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ ३६ ॥**

मध्विति ॥ द्वौ रेफौ वर्णविशेषौ यस्य स द्विरेफो भ्रमरः। उपचारात्तदर्थोऽपि द्विरेफ उच्यते। यथाह कैयटः—'शब्दधर्मेणाप्यर्थस्य व्यपदेशो दृश्यते, यथा भ्रमरशब्दस्य द्विरेफत्वाद्द्विरेफो भ्रमरः' इति। कुसुममेवैकं साधारणं पात्रं तस्मिन्, मधु मकरन्दम्। 'मधु मद्ये पुष्परसे' इति विश्वः। स्वां प्रियां भृङ्गीमनुवर्तमानोऽनुसरन् पपौ, तत्पीतशेषं पपावित्यर्थः। कृष्णश्चासौ सारः शबलश्च कृष्णसारः कृष्णमृगः। 'वर्णो वर्णेन' (पा.२।१।६९) इति समासः। स्पर्शेन स्पर्शसुखेन निमीलिताक्षीं मृगीं शृङ्गेणाकण्डूयत घर्षितवान्। 'कण्ड्वादिभ्यो यक्' (पा.३।१।२७) इति यक्। ततः कर्तरि लङ् ॥ ३६ ॥

**ददौ [2]रसात्पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः।**
**अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥ ३७ ॥**

---

पाठा०—१ संस्पर्श. २ सरःपङ्कज.

दद्राविति ॥ रसादतिरागात् करेणुः करिणी । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । पङ्काजायत इति पङ्कजं तस्य रेणुः पङ्कजरेणुः, तस्य गन्धोऽस्यास्तीति पङ्कजरेणुगन्धि गण्डूषजलं मुखान्तर्धृतजलं गजाय ददौ । रथाङ्गनामा चक्रवाकोऽर्धं यथा तथोपभुक्तेनार्धजग्धेन बिसेन जायां संभावयामास, [1] स्वजग्धशेषं ददावित्यर्थः ॥ ३७ ॥

**गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रलेखम् ।**
**पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्बे [1] ॥ ३८ ॥**

गीतान्तरेष्विति ॥ किंपुरुषः किंनरः श्रमवारिलेशैः स्वेदोदबिन्दुभिः किंचिदीषत्समुच्छ्वासिता विश्लेषिताः पत्रलेखा यस्य तत् । पुष्पाणामासवो मद्यं पुष्पासवः, पुष्पोद्भवमद्यमित्यर्थः । वसन्ते मधूकस्य संभवात् । पुष्पवासितमिति केचित् । तेनाघूर्णिताभ्यामुत्क्रान्ताभ्यां नेत्राभ्यां शोभत इति तथोक्तं प्रियामुखं गीतान्तरेषु गीतमध्येषु चुचुम्बे चुचुम्ब ॥ ३८ ॥

**पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालौष्ठमनोहराभ्यः ।**
**लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥ ३९ ॥**

पर्याप्तेति ॥ पर्याप्ताः समग्राः पुष्पस्तबका एव स्तना यासां ताभ्यः । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' (पा. ४।१।५४) इति विकल्पान्न ङीष् । स्फुरन्तः प्रवालाः पल्लवा एवौष्ठास्तैर्मनोहराभ्यो लता एव वध्वस्ताभ्यः सकाशात्तरवोऽपि। लिङ्गादेव पुंस्त्वं गम्यते। विनम्राः शाखा एव भुजास्तैर्बन्धनान्यवापुः, ताभिरालिङ्गिता इत्यर्थः । स्थावराणामपि मदनविकारोऽभूत् , किमुतान्येषामिति भावः । एतच्च तरुलतानामपि चेतनत्वादुक्तम् । यथाह मनुः ( १।४९ )— 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' इति । अत्र रूपकालंकारः ॥ ३९ ॥

**श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव ।**
**आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥४०॥**

---

पाठा० — १ चुचुम्ब.

---

टिप्प०—1 श्लोकेनानेन 'सज्जितानि सुरभीण्यथ यूनामुल्लसन्नयनवारिरुहाणि । आययुः सुमधुराणि सुरायाः पात्रतां प्रियतमावदनानि ॥' इति माघ (१०।१) श्लोकस्तुलनामर्हति ।

श्रुतेति ॥ अस्मिन्क्षणे वसन्ताविर्भावकाले भगवान्हरः श्रुताप्सरोगीतिरपि, दिव्याङ्गनागानमाकर्णयन्नपीत्यर्थः । प्रसंख्यानपर आत्मानुसंधानपरो बभूव । तथा हि—आत्मनश्चित्तस्येश्वराणां नियन्तॄणाम्, वशिनामित्यर्थः । विहन्यन्त एभिरिति विघ्नाः प्रत्यूहाः । घञर्थे कप्रत्ययः । जातु कदाचिदपि समाधिभेदे समाधिभञ्जने प्रभवः समर्था न भवन्ति ॥ ४० ॥

लतागृहद्वारगतोऽथ नन्दी वामप्रकोष्ठार्पितहेमवेत्रः ।
मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान्व्यनैषीत् ॥४१॥

लतेति । अथ लतागृहद्वारं गतो वामे प्रकोष्ठेऽर्पितहेमवेत्रो धारितहेमदण्डो नन्दी नन्दिकेश्वरः । 'नन्दी भृङ्गिरिटस्तण्डुनन्दिनौ नन्दिकेश्वरे' इति कोशः । मुखेऽर्पितायाः सरोषविस्मयस्तिमितावलोकं निहिताया एकस्या अङ्गुलेस्तर्जन्याः संज्ञया सूचनयैव । 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इत्यमरः । गणान्प्रमथांश्चापलाय चापलं कर्तुं मा भवतेति । 'क्रियार्थोपपदस्य—(पा.२।३।१४) इत्यादिना चतुर्थी । व्यनैषीच्छिक्षितवान् ॥ ४१ ॥

न केवलं गणा एव विनीताः, किंतु जरायुजादिचतुर्विधं प्राणिजातमपीत्याह—

निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम् ।
तच्छासनात्काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे ॥ ४२ ॥

निष्कम्पेति ॥ निष्कम्पवृक्षम्, इदमुद्भिज्जोपलक्षणम् । निभृतद्विरेफं निश्चलभृङ्गम्, स्वेदजोपलक्षणमेतत् । मूकाण्डजं निःशब्दपक्षिसरीसृपादिकम्, एतेनाण्डजजातिरुक्ता । शान्तमृगप्रचारम्, जरायुजोपलक्षणमेतत् । सर्वमेव काननं तच्छासनान्नन्दीश्वराज्ञया चित्रार्पितारम्भं चित्रलिखितारम्भमिवावतस्थे । 'नृगवाद्या जरायुजाः । स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः । उद्भिदस्तरुगुल्माद्याः' इत्यमरः ॥ ४२ ॥

दृष्टिप्रपातं परिहृत्य तस्य कामः पुरःशुक्रमिव प्रयाणे ।
प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ॥ ४३ ॥

दृष्टिप्रपातमिति ॥ कामः प्रयाणे यात्रायां पुरोगतः शुक्रो यस्मिन्देशे तं पुरःशुक्रं देशमिव । 'प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च । अपि शक्रसमो राजा

हतसैन्यो निवर्तते ॥' इति प्रतिषेधात् । तस्य दृष्टिप्रपातं दृग्विषयं परिहृत्य प्रान्तेषु पार्श्वदेशेषु संसक्ता अन्योन्यसंसृष्टा नमेरूणां सुरपुंनागानां शाखा यस्य तत् । तिरोधानयोग्यमिति भावः । भूतपतेः शिवस्य ध्यानास्पदं समाधिस्थानम्, 'आस्पदं प्रतिष्ठायाम्' (पा. ६।१।१४६) इति निपातः । विवेश ॥ ४३ ॥

**सदेवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम् ।**
**आसीनमासन्नशरीरपातस्त्रियम्बकं संयमिनं ददर्श ॥ ४४ ॥**

स इति ॥ आसन्नशरीरपात आसन्नमृत्युः स कामः शार्दूलचर्मणा व्यवधानवत्याम्, व्याघ्रचर्मास्तृतायामित्यर्थः । 'मोक्षश्रीर्व्याघ्रचर्मणि' इति प्राशस्त्यादिति भावः । देवदारुद्रुमवेदिकायामासीनमुपविष्टं संयमिनं समाधिनिष्ठं त्रियम्बकं त्रिनेत्रं ददर्श । केचित्साहसिकाः 'त्रिलोचनम्' इति पेठुः । 'त्र्यम्बकम्' इत्युक्ते पादपूरणव्यत्यासात् ' त्रियम्बकम् ' इति पादपूरणार्थोऽयमियङादेशश्छान्दसः, महाकविप्रयोगादभियुक्तैरङ्गीकृतः ॥ ४४ ॥

तमेव देवं षड्भिः श्लोकैर्वर्णयति—

**पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसम् ।**
**उत्तानपाणिद्वयसंनिवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥**

पर्यङ्केति ॥ पर्यङ्कबन्धेन वीरासनेन स्थिरपूर्वकायं निश्चलोत्तरार्धमृजुरायतश्च ऋज्वायतस्तं, संनमितावुभावंसौ यस्य तं तथोक्तम् । 'वृत्तिविषये उभशब्दस्थान उभयशब्दप्रयोगः' इत्युक्तं कैयटेन । उत्तान ऊर्ध्वतलो यः पाणिद्वयस्य संनिवेशः संस्थानं तस्मादङ्कमध्ये प्रफुल्लं राजीवं पङ्कजं यस्य तमिव स्थितम् । वीरासने वसिष्ठः—'एकं पादमथैकस्मिन्विन्यस्योरौ तु संस्थितम् । इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम् ॥' इति । तथा योगसारे—'उत्तानिते करतले करमुत्तानितं परम् । आदायाङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम् ॥' इति ॥ ४५ ॥

**भुजंगमोन्नद्धजटाकलापं कर्णावसक्तद्विगुणाक्षसूत्रम् ।**
**कण्ठप्रभासङ्गविशेषनीलां कृष्णत्वचं ग्रन्थिमतीं दधानम् ॥ ४६ ॥**

भुजंगमेति ॥ भुजंगमेनोन्नद्ध उन्नमय्य बद्धो जटाकलापो येन तं तथोक्तम् ।

---

पाठा०—१ त्रिलोचनम्. २ उद्बद्धः; आबद्ध. ३ कर्णावतंस. ४ मृगत्वचम्.

कर्णावसक्तम्, कर्णावलम्बीत्यर्थः । अत एव द्विगुणं द्विरावृत्तमक्षसूत्रमक्षमाला यस्य तम्, कण्ठप्रभाणां सङ्गेन मिश्रणेन विशेषनीलामतिनीलां ग्रन्थिमतीं बन्धनयुक्तां कृष्णत्वचं कृष्णमृगाजिनं दधानम् ॥ ४६ ॥

**किंचित्प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां विरतप्रसङ्गैः ।**
**नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्ष्यीकृतघ्राणमधोमयूखैः ॥ ४७ ॥**

किंचिदिति ॥ किंचित्प्रकाशा ईषत्प्रकाशाः स्तिमिता निश्चला उग्राश्च ताराः कनीनिका येषां तैः । 'तारकाऽक्ष्णः कनीनिका' इत्यमरः । भ्रूविक्रियायां भ्रूविक्षेपे विरतप्रसङ्गैः प्रसक्तिरहितैरविस्पन्दितपक्ष्ममालैरचलितपक्ष्मपङ्क्तिभिरधःप्रसृता मयूखा येषां तैरधोमयूखैर्नेत्रैः । त्रिनेत्रत्वाद्बहुवचनम् । लक्ष्यीकृतघ्राणं, नासाग्रनिविष्टदृष्टिमित्यर्थः । 'करणान्यबहिष्कृत्य स्थाणुवन्निश्चलात्मकः । आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचनः ॥' इति योगसारे ॥ ४७ ॥

**अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरंगम् ।**
**अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्पमिव प्रदीपम् ॥ ४८ ॥**

अवृष्टीति ॥ अन्तश्चरन्तीत्यन्तश्चरास्तेषां मरुतां प्राणादीनां निरोधाद्धेतोरवृष्टिसंरम्भमविद्यमानवर्षसंभ्रमम्बुवाहमिव स्थितम् । एतेन प्राणनिरोधः सूचितः । अनुत्तरंगमनुद्भूततरंगमपामाधारं ह्रदमिव स्थितम्, एतेनापाननिरोधः सूचितः । तथा निवाते निर्वातदेशे निष्कम्पं निश्चलं प्रदीपमिव स्थितम् । एतेन शेषवायुनिरोधः सूचितः । 'निवातावाश्रयावातौ' इत्यमरः ॥ ४८ ॥

**कपालनेत्रान्तरलब्धमार्गैर्ज्योतिःप्ररोहैरुदितैः शिरस्तः ।**
**मृणालसूत्राधिकसौकुमार्यां बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः॥४९॥**

कपालेति ॥ कपालनेत्रान्तरेण ब्रह्मकरोटिनेत्रविवरेण लब्धमार्गैः, शिरस्तो ब्रह्मरन्ध्रात् । पञ्चम्यास्तसिल् । उदितैरुद्भूतैर्ज्योतिःप्ररोहैस्तेजोङ्कुरैर्मृणालसूत्राधिकं सौकुमार्यं मार्दवं यस्यास्तां बालस्येन्दोः शिरश्चन्द्रस्य लक्ष्मीं ग्लपयन्तम् ॥ ४९ ॥

**मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम् ।**
**यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥ ५० ॥**

---

पाठा०—१ विगत. २ लक्षीकृत. ३ निर्वात. ४ वेदविदः.
५ कु० सं०

**मन इति** ॥ नवभ्यो द्वारेभ्यो निषिद्धा निवर्तिता वृत्तिः संचारो यस्य तत्तथोक्तम् । समाधिना प्रणिधानेन वश्यं वशंगतम् । यत्प्रत्ययः । 'प्रणिधानं समाधानं समाधिश्च समाश्रयः' इति हलायुधः । मनो हृदि हृदयाख्येऽधिष्ठाने व्यवस्थाप्य । तथा च वसिष्ठः—'यतो निर्याति विषयान् यस्मिंश्चैव प्रलीयते । हृदयं तद्विजानीयान्मनसः स्थितिकारणम् ॥' इति । क्षेत्रविदः क्षेत्रज्ञाः पुरुषाः यं न क्षरतीत्यक्षरमविनाशिनं विदुर्विदन्ति । 'विदो लटो वा' (पा. ३।४।८३) इति झेर्जुस् । तमात्मानमात्मनि स्वस्मिन्नवलोकयन्तं साक्षात्कुर्वन्तम्, स्वातिरेकेण परमात्मनोऽभावादिति भावः ॥ ५० ॥

**स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाप्यधृष्यम् ।**
**नालक्षयत्साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात् ॥५१॥**

**स्मरेति** ॥ स्मरः कामस्तथाभूतं पूर्वोक्तरूपं मनसाप्यधृष्यमयुग्मनेत्रं विषमाक्षमदूरात्पश्यन् । साध्वसेन सन्नहस्तो विश्लथपाणिः सन् । स्वहस्तात्स्रस्तं शरं चापमपि चापं च नालक्षयन्न विवेद, भीतो मुह्यतीति भावः ॥ ५१ ॥

**निर्वाणभूयिष्ठमथास्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन ।**
**अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥ ५२ ॥**

**निर्वाणेति** ॥ अथ निर्वाणेन नाशेन भूयिष्ठं निर्वाणभूयिष्ठम्, नष्टप्रायमित्यर्थः । अस्य स्मरस्य वीर्यं बलं वपुर्गुणेन सौन्दर्येण संधुक्षयन्तीव पुनरुज्जीवयन्तीव स्थिता, वनदेवताभ्यां सखीभूताभ्यामनुप्रयाताऽनुगता स्थावरराजकन्या पार्वत्यदृश्यत दृष्टा ॥ ५२ ॥

तामेवाह चतुर्भिः—

**अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।**
**मुक्ताकलापीकृतसिन्दुवारं वसन्तपुष्पाभरणं वहन्ती ॥ ५३ ॥**

**अशोकेति** ॥ अशोकपुष्पेण निर्भर्त्सितास्तिरस्कृताः पद्मरागा येन तत्तथोक्तम् । आकृष्टहेमद्युतीन्याहृतस्वर्णाभरणवर्णानि कर्णिकाराणि यस्मिंस्तत्तथोक्तम् । मुक्ताकलापीकृतानि सिन्दुवाराणि निर्गुण्डीकुसुमानि यस्मिंस्तत् । 'सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि' इत्यमरः । वसन्तपुष्पाण्येवाभरणं वहन्ती ॥५३॥

---

पाठा०—१ सिन्धुवारं.

आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् ।
पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥ ५४ ॥

आवर्जितेति ॥ स्तनाभ्यां किंचिदावर्जितेवेषदानमितेव । तरुणार्कस्य राग इव रागो यस्य तत्, बालार्कारुणमित्यर्थः । उपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्च । वासो वसानाच्छादयन्ती । अत एव पर्याप्तपुष्पस्तबकावनम्रा पल्लविनी किसलयवती संचारिणी लतेव, स्थितेति शेषः ॥ ५४ ॥

स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण मौर्वीं द्वितीयामिव कार्मुकस्य ॥५५॥

स्रस्तामिति ॥ स्थानविदा निक्षेपयोग्यस्थानवेदिना स्मरेण न्यासीकृतां निक्षेपीकृताम् । कर्मणि प्रभवतीति कार्मुकं धनुः, 'कर्मण उकञ्' (पा. ५।१।१०३) इत्युकञ्प्रत्ययः । तस्य द्वितीयां मौर्वीमिव स्थिताम् । अत्र हि न्यस्ता मौर्व्युत्तरत्र हरवैरनिर्यातनायोपयुज्यत इति भावः । नितम्बात्स्रस्तां चलितां केसरदाम बकुलमाला सैव काञ्ची तां पुनःपुनरवलम्बमाना हस्तेन धारयन्ती ॥ ५५ ॥

सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम् ।
प्रतिक्षणं संभ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥ ५६ ॥

सुगन्धीति ॥ सुगन्धिभिर्निश्वासैर्विवृद्धतृष्णम् । बिम्बतुल्योऽधरो बिम्बाधरः । 'बिम्बाधर इति वृत्तौ मध्यपदलोपः स्यात्' (काव्या. सू. ५।२।१४) इति वामनः । तस्यासन्नचरं संनिकृष्टचरं द्विरेफं भृङ्गं प्रतिक्षणं संभ्रमेण लोलदृष्टिश्चञ्चलाक्षी सती लीलारविन्देन निवारयन्ती ॥ ५६ ॥

तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्पचापः स्वकार्यसिद्धिं पुनराशशंसे ॥५७॥

तामिति ॥ सर्वावयवेष्वनवद्यामगर्ह्याम् । 'अवद्यपण्य–' (पा. ३।१।१०१) इति निपातः । रतेः कामकलत्रस्यापि ह्रीपदं लज्जानिमित्तमादधानाम्, न्यूनतामावहन्तीमित्यर्थः । तां पार्वतीं वीक्ष्य पुष्पचापः कामो जितेन्द्रिये, दुर्जये-

पाठा०—१ सुजातपुष्प. २ पुष्पकाञ्चीम्. ३ द्वितीयमौर्वीमिव. ४ पुष्पकेतु. ५ स्वकर्मसिद्धिम्. ६ आशशंस.

ऽपीत्यर्थः । शूलिनि शिवे विषये स्वकार्यसिद्धिं पुनराशशंसे चकमे । पूर्वं 'साध्वसस्रस्तहस्तः' (३।५१) इत्यादिना कार्यसिद्धेरुन्मूलितत्वाभिधानादिह 'पुनः' इत्युक्तम् ॥ ५७ ॥

**भविष्यतः पत्युरुमा च शंभोः समाससाद प्रतिहारभूमिम् ।**
**योगात्स चान्तः परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम ॥ ५८ ॥**

भविष्यत इति ॥ उमा च भविष्यतः पत्युः शंभोः प्रतिहारभूमिं द्वारदेशं समाससाद । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । स शंभुश्चान्तः परमात्मेति संज्ञा यस्य तत्परं मुख्यम् । 'परं दूरान्यमुख्येषु' इति यादवः । ज्योतिर्दृष्ट्वा साक्षात्कृत्य योगाद्ध्यानात् । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । उपारराम उपारतः । 'व्याङ्परिभ्यो रमः' (पा. १।३।८३) इति परस्मैपदम् ॥ ५८ ॥

**ततो भुजंगाधिपतेः फणाग्रैरधः कथंचिद्धृतभूमिभागः ।**
**शनैः कृतप्राणविमुक्तिरीशः पर्यङ्कबन्धं निबिडं बिभेद ॥ ५९ ॥**

तत इति ॥ ततो भुजंगाधिपतेः शेषस्य फणाग्रैरधो भूमेरधः कथंचिदतियत्नेन धृतो भूमिभागः स्वोपवेशनभूभागो यस्य स तथोक्तः । वायुधारणाहितलाघवनिवृत्त्या भगवतो गुरुत्वादिति भावः । शनैः कृता प्राणानां प्राङ्निरुद्धानां विमुक्तिः पुनःसंचारो येन स कृतप्राणविमुक्तिः, ईशो निबिडं दृढं पर्यङ्कबन्धं वीरासनं बिभेद शिथिलीचकार ॥ ५९ ॥

**तस्मै शशंस प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।**
**प्रवेशयामास च भर्तुरेनां भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ ६० ॥**

तस्मा इति ॥ अथ नन्दी तस्मै भगवते । क्रियाग्रहणाच्चतुर्थी । प्रणिपत्य नमस्कृत्य शुश्रूषया सेवया निमित्तेनोपेताम्, सेवार्थमागतामित्यर्थः । शैलसुतां शशंस निवेदयामास । भर्तुः स्वामिनो भ्रूक्षेपमात्रेण भ्रूसंज्ञयैवानुमतप्रवेशामङ्गीकृतप्रवेशामेनां शैलसुतां प्रवेशयामास च ॥ ६० ॥

**तस्याः सखीभ्यां प्रणिपातपूर्वं स्वहस्तलूनः शिशिरात्ययस्य ।**
**व्यकीर्यत त्र्यम्बकपादमूले पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥ ६१ ॥**

---

पाठा०—१ उपासितुं सा च पिनाकपाणिम्. २ अन्तर्गतम्. ३ अनुमित.

तस्या इति ॥ तस्याः पार्वत्याः सखीभ्यां पूर्वोक्ताभ्यां स्वहस्तेन लून उपचितः पल्लवभङ्गभिन्नः किसलयशकलमिश्रः शिशिरात्ययस्य वसन्तस्य संबन्धी पुष्पोच्चयः पुष्पप्रकरः। 'हस्तादाने चेरस्तेये' (पा. ३।३।४०) इति घञ्विषयत्वात्कवीनामयं प्रामादिकः प्रयोग इति वल्लभः। त्र्यम्बकपादमूले प्रणिपातपूर्वं नमस्कारपूर्वकं व्यकीर्यत विक्षिप्तः ॥ ६१ ॥

**उमापि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम्।**
**चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ६२ ॥**

उमेति ॥ उमापि नीलालकानां मध्ये शोभत इति तत्तथोक्तम्, अलकन्यस्तमित्यर्थः। नवकर्णिकारं विस्रंसयन्ती कर्णाच्च्युतः पल्लवो यस्य तेन मूर्ध्ना वृषभध्वजाय प्रणामं चकार। क्रियाग्रहणात्संप्रदानत्वम् ॥ ६२ ॥

**अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन।**
**न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थम् ॥६३॥**

अनन्येति ॥ सा कृतप्रणामा देवी भवेन हरेण। अन्यां न भजतीति तमनन्यभाजम्। 'भजो ण्विः' (पा. ३।२।६२) इति ण्विप्रत्ययः। सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः। पतिमाप्नुहीति तथ्यं सत्यमेवाभिहितोक्ता। उत्तरत्र तथैव संभवादिति भावः। अभिदधातेर्ब्रुवर्थस्य दुहादित्वादप्रधाने कर्मणि क्तः। तथा हि—ईश्वरव्याहृतयो महापुरुषोक्तयः कदाचिदपि लोके भुवने। 'लोकस्तु भुवने जने' इत्यमरः। विपरीतं विसंवादिनमर्थमभिधेयं न पुष्णन्ति, न बोधयन्तीत्यर्थः ॥ ६३ ॥

**कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः।**
**उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श ॥ ६४ ॥**

कामस्त्विति ॥ कामस्तु बाणावसरं प्रतीक्ष्य, उमासंनिधानादयमेव बाणप्रयोगसमय इति ज्ञात्वा पतङ्गेन तुल्यं पतङ्गवच्छलभवत्। 'समौ पतङ्गशलभौ' इत्यमरः। 'तेन तुल्यं क्रिया चेद्वतिः' (पा. ५।१।११५) इति वतिप्रत्ययः। वह्निमुखं विविक्षुः प्रवेष्टुमिच्छुः। विशतेः सन्नन्तादुप्रत्ययः। उमायाः समक्षमक्ष्णः समीपमुमासमक्षम्। 'अव्ययीभावे शरत्प्रभृतिभ्यः' (पा. ५।४।१०७) इति समासान्तोऽच्प्रत्ययः। हरे बद्धलक्ष्यः सन्। शरासनस्य ज्यां मौर्वीं मुहुराममर्श परामृष्टवान् ॥ ६४ ॥

अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।
विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥६५॥

अथेति ॥ अथ गौरी । तपोऽस्यास्तीति तपस्वी । 'अस्मायामेधास्रजो विनिः' (पा. ५।२।१२१) इति विनिप्रत्ययः । तस्मै तपस्विने गिरिशाय ताम्ररुचा रक्तवर्णेन करेण भानुमतोंऽशुमतो मयूखैर्विशोषितां मन्दाकिन्याः पुष्कराणि पद्मानि तेषां बीजानि तेषां मालां जपमालिकामुपनिन्ये समर्पितवती ॥ ६५ ॥

प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥६६॥

प्रतिग्रहीतुमिति ॥ त्रिलोचनश्च प्रणयिप्रियत्वादर्थिप्रियत्वात्तामक्षमालां प्रतिग्रहीतुं स्वीकर्तुमुपचक्रमे । पुष्पं धनुर्यस्य स पुष्पधन्वा कामश्च । 'वा संज्ञायाम्' (पा. ५।४।१३३) इत्यनङादेशः । संमोह्यतेऽनेनेति संमोहनं नाम । नामेति प्रसिद्धौ । अमोघं बाणं सायकं धनुषि समधत्त संहितवान् ॥ ६६ ॥

हरस्तु किंचित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥६७॥

हर इति ॥ हरस्तु हरोऽपि चन्द्रोदयारम्भेऽम्बुराशिरिव किंचिदीषत्परिलुप्तधैर्यः, न तु प्राकृतजनवदत्यन्तलुप्तधैर्य इति भावः । बिम्बफलतुल्योऽधरोष्ठो यस्य तस्मिन्नुमामुखे विलोचनानि व्यापारयामास, त्रिभिरपि लोचनैः साभिलाषमद्राक्षीदित्यर्थः । एतेन भगवतो रतिभावोदय उक्तः ॥ ६७ ॥

विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥ ६८ ॥

विवृण्वतीति ॥ शैलसुतापि स्फुरद्बालकदम्बकल्पैर्विकसत्कोमलनीपसदृशैः[1], पुलकितैरित्यर्थः । 'ईषदसमाप्तौ–' (पा. ५।३।६७) इत्यादिना कल्पप्प्रत्ययः । अङ्गैर्भावं रत्याख्यं विवृण्वती प्रकाशयन्ती चारुतरेण पर्यस्तविलोचनेन व्रीडा-

---

पाठा०—१ परिवृत्त.

टिप्प०—1 'कदंबो वृक्षविशेषः, अङ्गानां रोमाञ्चितत्वादत्र तत्सादृश्यम् । बालशब्देन देव्या यौवनावस्था दर्शिता' इति नारायण० ।

विभ्रान्तनेत्रेण मुखेनासाचि साचि संपद्यमाना साचीकृता तिर्यक्कृता। 'तिर्यगर्थे साचि तिरः' इत्यमरः। तस्थौ, ह्रिया मुखं साचीकृत्य स्थितेत्यर्थः। न केवलं हरस्यैव, देव्या अप्युदितो रतिभाव इति भावः ॥ ६८ ॥

अथेन्द्रियक्षोभमयुग्मनेत्रः पुनर्वशित्वाद्बलवन्निगृह्य।
हेतुं स्वचेतोविकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ ६९ ॥

अथेति ॥ अथायुग्मानि नेत्राणि यस्य सोऽयुग्मनेत्रस्त्रिनेत्रो वशित्वाज्जितेन्द्रियत्वादिन्द्रियक्षोभं पूर्वोक्तमिन्द्रियविकारं पुनर्बलवद्दृढं निगृह्य निवार्य स्वचेतोविकृतेः स्वचित्तविकारस्य हेतुं कारणं दिदृक्षुर्द्रष्टुमिच्छुर्दिशामुपान्तेषु दृष्टिं ससर्ज प्रसारयामास ॥ ६९ ॥

स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम्।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ ७० ॥

स इति ॥ स भगवान् दक्षिणापाङ्गे निविष्टा स्थिता मुष्टिर्यस्य तं नतांसमाकुञ्चितः सव्यपादो यस्य तम्, आलीढाख्यस्थानके स्थितमित्यर्थः। चक्रीकृतचारुचापं मण्डलीकृतसौम्यकोदण्डं प्रहर्तुमभ्युद्यतमात्मयोनिं मनोभवं ददर्श। आलीढलक्षणमाह यादवः—'स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृती ॥ समानौ स्यात्समपदमालीढं पदमग्रतः। दक्षिणं वाममाकुञ्च्य प्रत्यालीढं विपर्ययः ॥' इति ॥ ७० ॥

तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ७१

तप इति ॥ तपःपरामर्शेन तपस आस्कन्दनेन विवृद्धमन्योः प्रवृद्धकोपस्य भ्रूभङ्गेन दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तस्य हरस्य तृतीयादक्ष्णः स्फुरन्दीप्यमान उदर्चिरुद्भूतज्वालः कृशानुरग्निः सहसाऽतर्कितमेव। 'अतर्किते तु सहसा' इत्यमरः। निष्पपात किल निश्चक्राम खलु ॥ ७१ ॥

क्रोधं प्रभो! संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ ७२ ॥

क्रोधमिति ॥ हे प्रभो स्वामिन्! क्रोधं संहर संहर निवर्तय निवर्तय।

'चापले द्वे भवत इति वक्तव्यम्' (वा० ४६९४) इति वार्तिकेन द्वित्वम् । 'संभ्रमेण वृत्तिश्चापलम्' इति काशिका । इत्येवं मरुतां देवानां गिरो वाचः खे व्योम्नि यावच्चरन्ति प्रवर्तन्ते तावत्तत्कालमेव भवस्य नेत्राज्जन्म यस्य स भवनेत्रजन्मा । 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' ( काव्या.सू. ५।२।१९ ) इति वामनः । स वह्निर्मदनं भस्मैवावशेषो यस्य तं भस्मावशेषं चकार, ददाहेत्यर्थः॥७२॥

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ ७३ ॥

तीव्रेति ॥ तीव्राभिषङ्गप्रभवेणातिदुःसहाभिभवसंभवेन । 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' इति वैजयन्ती । इन्द्रियाणां चक्षुरादीनां वृत्तिं व्यापारं संस्तम्भयता प्रतिबध्नता मोहेन मूर्च्छया कर्त्रा । रतिर्मदनभार्या मुहूर्तमज्ञातं भर्तृव्यसनं भर्तृनाशो यया सा तथोक्ता सती कृतोपकारेव बभूव, सहसा दुःखोपनिपातान्मुमूर्च्छेत्यर्थः । मोहेन दुःखसंवेदनाभावात्तस्योपकारकत्वोक्तिः ॥ ७३ ॥

तमाशु विघ्नं तपसस्तपस्वी वनस्पतिं वज्र इवावभज्य ।
स्त्रीसंनिकर्षं परिहर्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः ॥ ७४ ॥

तमिति ॥ तपस्वी तपोनिष्ठो भूतपतिः शिवस्तपसो विघ्नमन्तरायभूतं तं काममाशु वज्रोऽशनिर्वनस्पतिं वृक्षमिवावभज्य भङ्क्त्वा स्त्रीसंनिकर्षं स्त्रीसंनिधानं परिहर्तुमिच्छन्, तस्यानर्थहेतुत्वादिति भावः । सभूतः सगणः सन्नन्तर्दधे ॥ ७४ ॥

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथंचित् ॥ ७५ ॥

शैलात्मजेति ॥ शैलात्मजा पार्वत्यप्युच्छिरस उन्नतशिरसो महतः पितुरभिलाषं 'हरो वरोऽस्तु' इति मनोरथं ललितं सुन्दरमात्मनो वपुश्च व्यर्थं निष्फलं

पाठा०—१ परिहर्तुकामः सोऽन्तर्दधे.

समर्थ्य विचार्य सख्योः समक्षं पुर इति च हेतुनाधिकं जातलज्जा । समानजनसमक्षमवमानस्यातिदुःसहत्वादिति भावः । शून्या निरुत्साहा सती कथंचित्कृच्छ्रेण भवनस्याभिमुखी जगाम ॥ ७५ ॥

[1]संपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।
सुरगज इव बिभ्रत्पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीद्वेगदीर्घीकृताङ्गः[2] ॥ ७६ ॥

सपदीति ॥ सपद्यद्रिर्हिमवान् रुद्रस्य संरम्भात्कोपाद्भीत्या । 'संरम्भः संभ्रमे कोपे' इति विश्वः । मुकुलिताक्षीं निमीलितनेत्राम् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' (पा.५।४।११३) इति षच्प्रत्ययः। 'षिद्गौरादिभ्यश्च' (पा.४।१।४१) इति ङीष् । अनुकम्पितुमर्हामनुकम्प्याम् । 'ऋहलोर्ण्यत्' (पा.३।१।१२४) इति ण्यत्प्रत्ययः। दुहितरं दोर्भ्यामादाय दन्तयोर्लग्नां पद्मिनीं नलिनीं बिभ्रत्सुरगज इव वेगेन रयेण दीर्घीकृताङ्ग आयतीकृतशरीरः सन् । पन्थानं प्रति गता मार्गानुसारिणी गतिर्यस्य स प्रतिपथगतिरासीत्, पन्थानमनुसृत्य जगामेत्यर्थः ॥ ७६ ॥

इति श्रीमन्महोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया
व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये
मदनदहनो नाम तृतीयः सर्गः ।

---

## चतुर्थः सर्गः ।

मूर्च्छिता रतिरित्युक्तम्, संप्रति तद्वृत्तान्तमेवाह—

अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ॥ १ ॥

अथेति ॥ अथानन्तरं मोहो मूर्च्छा परमयनमाश्रयो यस्याः सा मोहपरायणा मोहैकशरणा सती । 'परायणमभिप्रेते तत्परे परमाश्रये' इति यादवः । विवशा

---

पाठा०—१ अथ स. २ दीर्घीकृतात्मा.

मूढत्वान्निश्चेष्टा कामवधू रतिः । असह्या दुःसहा वेदना यस्मिंस्तत्तथोक्तम् । विधवाया गतभर्तृकाया भावो वैधव्यम् । नवं च तद्वैधव्यं चेति नववैधव्यम् । 'नव'ग्रहणं दुःसहत्वद्योतनार्थम् । प्रतिपादयिष्यताऽनुभावयिष्यता । क्रियार्थक्रियायां लृट् । विधिना दैवेन । 'विधिर्विधाने दैवे च' इत्यमरः । विबोधिता, वैधव्यानुफलोऽयं विधिरिति भावः । अस्मिन्सर्गे वियोगिनीवृत्तानि—'विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी' इति लक्षणात् ॥ १ ॥

अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने ।
न विवेद तयोरतृप्तयोः प्रियमत्यन्तविलुप्तदर्शनम् ॥ २ ॥

अवधानेति ॥ सा रतिः प्रलयान्ते मूर्च्छावसाने । 'प्रलयो नष्टचेष्टता' इत्यमरः । उन्मिषिते उन्मीलिते विलोचने । अवधानं परं प्रधानं ययोस्तेऽवधानपरे दिदृक्षयाऽवहिते चकार । द्रष्टव्याभावात्तु न विवेदेत्याह—नेति । प्रियं काममतृप्तयोस्तृप्तिं न गतयोः, नित्यदिदृक्षमाणयोरित्यर्थः । तयोर्लोचनयोः । दर्शनक्रियापेक्षया संबन्धे षष्ठी । अत्यन्तविलुप्तं दर्शनं स्वलोचनयोः करणयोर्यस्य कर्मभूतस्य तमत्यन्तविलुप्तदर्शनं सन्तं न विवेद न ज्ञातवती । प्रियनाशापरिज्ञानाद्दिदृक्षां चक्र इति तात्पर्यार्थः ॥ २ ॥

अयि जीवितनाथ ! जीवसीत्यभिधायोत्थितया तया पुरः ।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥ ३ ॥

अयीति ॥ 'अयि' इति प्रश्ने । 'अयि प्रश्नानुनययोः' इति विश्वः । अयि जीवितनाथ ! जीवसि प्राणिषि कच्चित् ? इत्यभिधायोत्थितया तया रत्या पुरोऽग्रे क्षितौ पुरुषस्याकृतिरिवाकृतिर्यस्य तत्पुरुषाकृति केवलमेकं हरकोपानलभस्म ददृशे दृष्टम्, न तु पुरुष इति भावः ॥ ३ ॥

अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी[2] ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥ ४ ॥

अथेति ॥ अथ भस्मदर्शनानन्तरं पुनरेव विह्वला विक्लवा वसुधालिङ्गनधूसरस्तनी वसुधालिङ्गनेन क्षितिलुण्ठनेन धूसरौ धूसरवर्णौ स्तनौ कुचौ यस्याः सा

पाठा०—१ निमम. २ धूसराकृतिः.

तथोक्ता। 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' (पा.४।१।५४) इति ङीष्। विकीर्णमूर्धजा विकीर्णा विक्षिप्ता मूर्धजाः केशा यस्याः सा तथोक्ता सा रतिः स्थलीं वनभूमिम्, तत्रत्यान्प्राणिन इत्यर्थः। 'जानपदकुण्डगोणस्थल—' (पा. ४।१।४२) इत्यादिना ङीष्। समदुःखां स्वतुल्यशोकां कुर्वतीव विललाप परिदेवितवती। 'विलापः परिदेवनम्' इत्यमरः॥ ४॥

उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया।
तदिदं गतमीदृशीं दशां न विदीर्ये कठिनाः खलु स्त्रियः॥५॥

उपेति॥ तव यत्करणं गात्रम्। 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः। कान्तिमत्तया सौन्दर्येण हेतुना विलासिनां विलसनशीलानाम्। 'वौ कषलस–' (पा. ३।२।१४) इत्यादिना घिनुण्प्रत्ययः। उपमीयते येन तदुपमानमभूत्। तत्करणमिदमीदृशीं दशामवस्थां गतम्, भस्मीभूतमित्यर्थः। तथापि न विदीर्ये न विदीर्णा भवामि। कर्मकर्तरि लट्। तथा हि—स्त्रियः कठिनाः खलु, कठिनत्वादविदीर्यमाणत्वमित्यर्थः। कारणात्कार्यसमर्थनरूपोऽर्थान्तरन्यासः। 'धीरसंचारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता। स्मितपूर्वं तथालापो विलास इति कीर्तितः॥ इति॥ ५॥

क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः।
नलिनीं क्षतसेतुबन्धनो जलसंघात इवासि विद्रुतः॥ ६॥

क्वेति॥ हे प्रिय! क्षतसेतुबन्धनो भग्नसेतुबन्धो जलसंघातो जलौघो नलिनीमिव, जलैकायत्तजीवितामिति शेषः। त्वदधीनजीवितां त्वदायत्तप्राणां मां क्व नु विनिकीर्य कुत्र वा निक्षिप्य क्षणभिन्नसौहृदः क्षणत्यक्तसौहार्दः सन् विद्रुतः पलायितोऽसि? सेतुसौहृदयोः स्थितिहेतुत्वेन साम्यम्। सुहृदो भावः सौहृदम्। युवादित्वादण्प्रत्ययः। 'हृदयस्य हृल्लेखयदण्लासेषु' (पा. ६।३।५०) इति हृदादेशः। अणि हृद्भावाच्च 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (पा. ७।३।१९) इत्युभयपदवृद्धिः। हृद्भूतस्याण्विधाने तूभयपदवृद्धिः स्यात्। यथा सुहृदो भावः सौहार्दमिति। तदेवाह वामनः (काव्या.सू. ५।२।८३)—'सौहृददौर्हृदशब्दावणि हृद्भावात्' इति॥ ६॥

कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥ ७ ॥

कृतेति ॥ हे प्रिय ! त्वं मे मम विप्रियमप्रियं कृतवान्नासि; मया च ते तव प्रतिकूलमप्रियं न कृतम् । अकारणं निष्कारणमेव, परस्परापकाररूपकारणाभावेऽपीत्यर्थः । क्रियाविशेषणमेतत् । विलपन्त्यै, त्वद्दर्शनार्थिन्या अपीति भावः । रतये किं कथं दर्शनं न दीयते ? क्रियाग्रहणाच्चतुर्थी ॥ ७ ॥

विप्रियमाशङ्कते—

स्मरसि स्मर ! मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेशरदूषितेक्षणान्यवतंसोत्पलताडनानि वा ॥ ८ ॥

स्मरसीति ॥ हे स्मर ! गोत्रस्खलितेषु नामव्यत्यासेषु । 'गोत्रं नाम्न्यचले कुले' इति विश्वः । मेखलागुणैर्बन्धनं स्मरस्युत स्मरसि वा ? 'विकल्पे किं किमूत च' इत्यमरः । च्युतकेशरैर्भ्रष्टकिञ्जल्कैर्दूषिते ईक्षणे येषु तान्यवतंसोत्पलताडनानि, सधूलिक्षेपताडनानीत्यर्थः । स्मरसि वा ? अपकारस्मरणादिदमदर्शनमिति भावः ॥ ८ ॥

हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥ ९ ॥

हृदय इति ॥ 'हृदये वससि' इति स्मरवाक्यानुवादः । इत्येवंरूपं मत्प्रियं यदवोच उक्तवानसि । ब्रूञो लुङि 'वच उम्' (पा. ७।४।२०) इत्युमागमः । तत्कैतवमवैमि मिथ्येति मन्ये । इदं वचनमुपचारपदं परस्य रञ्जनार्थं यदसत्यभाषणं स उपचारस्तस्य पदं स्थानम् , कैतवस्थानमिति यावत्; न चेत्त्वमन-

पाठा०—१ ताडनानि च.

टिप्प०—1 रघुवंशगतोऽजविलापः कुमारसंभवगतो रतिविलापश्चेति करुणरसपरिप्लुतं विभिन्नभूमिकमप्येतद्विलापद्वयमविभिन्नकल्पनोपमाशब्दप्रयोगादिभिः कविकालिदासः सम्यग्वर्णितवान् । तत्र श्लोकेनानेन 'मनसापि न विप्रियं मया कृतपूर्वं' (रघु० ८।५२) इति श्लोको हि सर्वथार्थसाम्यमासादयति । 2 श्लोकेनानेन समं 'इयमप्रतिबोधशायिनीं रशना' (रघु० ८।५८) इति श्लोकस्तुलनामर्हति ।

ङ्गोऽशरीरः । कथं रतिरक्षताऽविनष्टा ? आश्रयनाशेऽप्याश्रितमविनष्टमिति विरोधादिति भावः ॥ ९ ॥

न च मे कश्चिद्विचारः, किंतु लोकः शोच्यत इत्याह—

**परलोकनवप्रवासिनः प्रतिपत्स्ये पदवीमहं तव ।**
**विधिना जन एष वञ्चितस्त्वदधीनं खलु देहिनां सुखम् १०**

**परलोकेति** ॥ परलोकं प्रति नवप्रवासिनोऽचिरप्रोषितस्य । अनेनानुगमनकालानतिपातः सूच्यते । तव पदवीं मार्गं प्रतिपत्स्ये, त्वामनुगमिष्यामीत्यर्थः । अतो मे नास्ति विचार इति भावः । किंतु विधिना दैवेनैष जनो लोको वञ्चितः प्रतारितः । देहिनां सुखं त्वदधीनं त्वय्यधीनं खलु । अधिशब्दस्य शौण्डादित्वात् 'सप्तमी शौण्डैः' ( पा. २।१।४० ) इति समासः । 'अध्युत्तरपदात्' ( पा. ५।४।७ ) इति खप्रत्ययः । एवमन्यत्रापि । सुखप्रदाभावे कुतः सुखमिति भावः ॥ १० ॥

तदेवाह—

**रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः ।**
**वसतिं प्रिय ! कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ११**

**रजनीति** ॥ हे प्रिय ! रजनीतिमिरेणावगुण्ठित आवृते पुरमार्गे घनशब्दविक्लवा गर्जितभीताः प्रियाः कामिनां वसतिं प्रापयितुं त्वदृते त्वां विना । 'अन्यारादितरर्ते-' ( पा. २।३।२९ ) इत्यादिना पञ्चमी । क ईश्वरः शक्तः ? न कश्चिदित्यर्थः । न हि कामान्धानां भीतिरस्तीति भावः ॥ ११ ॥

**नयनान्यरुणानि घूर्णयन्वचनानि स्खलयन्पदे पदे ।**
**असति त्वयि वारुणीमदः प्रमदानामधुना विडम्बना ॥१२॥**

**नयनानीति** ॥ अरुणानि नयनानि घूर्णयन्भ्रामयन् । तथा पदे पदे प्रतिपदम् । वीप्सायां द्विरुक्तिः । वचनानि स्खलयन्विपर्यासयन् प्रमदानां वारुणीमदो मद्यमदोऽधुना त्वय्यसति विडम्बनाऽनुकृतिमात्रम् । मदनाभावे मदस्य निष्फलत्वादिति भावः । तथा च शिशुपालवधे ( १०।३३ )—'तां मदो दयितसंगमभूषः' इति ॥ १२ ॥

अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः ।
बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग! मोक्ष्यति ॥ १३ ॥

अवगम्येति ॥ हे अनङ्ग अशरीर! प्रियबन्धोः प्रियसखस्य तव वपुः शरीरं कथीकृतमकथा कथा संपद्यमानं कृतं शब्दमात्रावशिष्टमवगम्य ज्ञात्वा निष्फलोदयः उद्दीप्याभावादुद्दीपनवैफल्यमिति भावः । निशाकरश्चन्द्रो बहुले कृष्णपक्षे गतेऽपि तनुतां कार्श्यं दुःखं यथा तथा कृच्छ्रान्मोक्ष्यति, वृथा वृद्धिरिति दुःखयिष्यत इत्यर्थः ॥ १३ ॥

हरितारुणचारुबन्धनः[1] कलपुंस्कोकिलशब्दसूचितः ।
वद संप्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति ॥ १४ ॥

हरितेति ॥ हरितं चारुणं च । 'वर्णो वर्णेन' (पा. २।१।६९) इति तत्पुरुषः । हरितारुणं चारु बन्धनं वृन्तं पुञ्जश्च यस्य स तथोक्तः । कलेन मधुरेण पुंस्कोकिलशब्देन पुरुषकोकिलनादेन सूचितोऽनुमापितश्च । चूतचर्वणकार्यत्वात्कलशब्दस्येति भावः । नवचूतप्रसवो नवचूतकुसुमं संप्रति कस्य बाणतां शरत्वं गमिष्यति वद; अन्यस्य पुष्पबाणस्याभावादिति भावः ॥ १४ ॥

अलिपङ्क्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजिता ।
विरुतैः करुणस्वनैरियं[2] गुरुशोकामनुरोदितीव माम् ॥ १५ ॥

अलीति ॥ त्वयाऽनेकशो बहुशो धनुषः कार्मुकस्य गुणकृत्ये मौर्वीकार्ये गुणवत्कर्मणि च नियोजिताधिकृतेयमलिपङ्क्तिः करुणस्वनैर्दीनस्वनैर्विरुतैः कूजितैर्गुरुशोकां दुर्भरदुःखाम् । 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे' इति शब्दार्णवः । मामनुरोदितीव । उपसर्गात्सकर्मकत्वम् । 'रुदादिभ्यः सार्वधातुके' (पा. ७।२।७६) इतीडागमः ॥ १५ ॥

प्रतिपद्य मनोहरं वपुः पुनरप्यादिश[3] तावदुत्थितः ।
रतिदूतिपदेषु कोकिलां मधुरालापनिसर्गपण्डिताम् ॥ १६ ॥

प्रतिपद्येति ॥ तावत्पुनरपि मनोहरं वपुः शरीरं प्रतिपद्य प्राप्योत्थितः सन् ।

---

पाठा०—१ चारुपल्लवः. २ स्वरैः. ३ परपुष्टा.

मधुरालापेषु प्रियोक्तिषु निसर्गपण्डितां स्वभावप्रगल्भां कोकिलां रतिदूतिपदेषु सुरतदूतीस्थानेष्वादिशाज्ञापय । प्रगल्भानामेव दौत्याधिकार इति भावः । ङीबन्तस्यापि 'दूती'शब्दस्य छन्दोभङ्गभयाद्ध्रस्वः । 'अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद्गिरम्' इति केचित् । 'उणादयो बहुलम्' (पा. ३।३।१) इति बहुलग्रहणाद्ध्रस्व इति वल्लभः ॥ १६ ॥

**शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च ।**
**सुरतानि च तानि ते रहः स्मर! संस्मृत्य न शान्तिरस्ति मे ॥१७॥**

शिरसेति ॥ हे स्मर! शिरसा प्रणिपत्य याचितानि सवेपथूनि सकम्पानि 'ट्वितोऽथुच्' (पा. ३.३।८९) इत्यथुच्प्रत्ययः । सात्त्विकान्तरोपलक्षणमेतत् । 'स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥' इति । उपगूढान्यालिङ्गनानि च । नपुंसके भावे क्तः । तान्यनुभूतप्रकाराणि रह एकान्ते सुरतानि च संस्मृत्य मे शान्तिर्नास्ति । अत्र समानकर्तृकत्वं दुर्घटं समानक्रियापेक्षास्तीति केचित् ॥ १७ ॥

**र[1]चितं रतिपण्डित! त्वया स्वयमङ्गेषु ममेदमार्तवम् ।**
**ध्रियते कुसुमप्रसाधनं तव तच्चारु वपुर्न दृश्यते ॥ १८ ॥**

रचितमिति ॥ हे रतिपण्डित रतिकुशल! त्वया ममाङ्गेष्ववयवेषु स्वयं रचितं ऋतुरस्य प्राप्त आर्तवं वासन्तम् । 'ऋतोरण्' (पा. ५।१।१०५) इत्यण्प्रत्ययः । कुसुमप्रसाधनं पुष्पाभरणमिदं ध्रियतेऽवतिष्ठते । 'धृञ् अवस्थाने' इति धातोस्तौदादिकात्कर्तरि लट् । तव तत्प्रसाधकं चारु सुन्दरं वपुस्तु न दृश्यते ॥ १८ ॥

**वि[2]बुधैरसि यस्य दारुणैरसमाप्ते प[3]रिकर्मणि स्मृतः ।**
**तमिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेहि मे ॥ १९ ॥**

---

**पाठा०**—१ नवमङ्गेषु. २ विबुधैस्त्वमनङ्ग. ३ प्रतिकर्मणि.

---

**टिप्प०**—1 कोकिलानां रतिदौत्ये सामर्थ्यमुक्तं कालिदासेन (रघु. ९।४७)–'त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः । परभृताभिरितीव निवेदिते स्मरमते रमते स वधूजनः ॥' इति । 2 १८–१९ तमं श्लोकद्वयं 'मिथुनं परिकल्पितं त्वया' (रघु. ८।६१–६२) इत्यादिश्लोकद्वयेन विमर्शमर्हति ।

विबुधैरिति ॥ दारुणैः क्रूरैः । प्राणान्तिके कर्मणि नियोगादिति भावः । विबुधैर्देवैः, अनभिज्ञत्वं च ध्वन्यते । यस्य मच्चरणस्य परिकर्मणि प्रसाधने । 'परिकर्म प्रसाधनम्' इत्यमरः । असमाप्ते सति स्मृतोऽसि तमिमं दक्षिणेतरं वामं मे चरणं निर्मितरागं रचितलाक्षारागं कुर्वन्नागच्छ ॥ १९ ॥

अहमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयणी भवामि ते ।
चतुरैः सुरकामिनीजनैः प्रिय ! यावन्न विलोभ्यसे दिवि ॥ २० ॥

अहमिति ॥ अहं पतङ्गवर्त्मना शलभमार्गेण, अग्निप्रवेशेनेत्यर्थः । 'पतङ्गः शलभे चाग्नौ मार्जारेऽर्के शरे खगे' इति वैजयन्ती । एत्यागत्य पुनस्तेऽङ्काश्रयण्युत्सङ्गवर्तिनी भवामि संप्रत्येव भविष्यामि । 'वर्तमानसामीप्ये वर्तमानवद्वा' (पा. ३।३।१३१) इति लट् । हे प्रिय ! दिवि स्वर्गे चतुरैः सुरकामिनीजनैरप्सरोगणैर्यावन्न विलोभ्यसे, विलोभयिष्यसे 'यावत्पुरानिपातयोर्लट्' (पा. ३।३।४) इति लट् ॥ २० ॥

मदनेन विनाकृता रतिः क्षणमात्रं किल जीवितेति मे ।
वचनीयमिदं व्यवस्थितं रमण ! त्वामनुयामि यद्यपि ॥ २१ ॥

मदनेनेति ॥ हे रमण ! त्वामनुयामि यद्यप्यनुगमिष्याम्येव । 'वर्तमानसामीप्ये वर्तमानवद्वा' (पा. ३।३।१३१) इति लट् । 'यद्यपीत्यवधारणे' इति केशवः । किंतु रतिर्मदनेन विनाकृता, वियोजिता सतीत्यर्थः । सुप्सुपेति समासः । क्षणमात्रं जीविता किलेतीदं वचनीयं निन्दा मे मम व्यवस्थितं स्थिरमभूत् ॥ २१ ॥

क्रियतां कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया ।
सममेव गतोऽस्यतर्कितां गतिमङ्गेन च जीवितेन च ॥ २२ ॥

क्रियतामिति ॥ परलोकेऽन्तरितस्य व्यवहितस्य, मृतस्येत्यर्थः । ते तव मयाऽन्त्यमण्डनं कथं केन प्रकारेण क्रियताम् ? क्रियतामित्यत्र कामचारे लोट् बोध्यः, द्रुतदग्धस्य ते यथेच्छमण्डनमपि न संभवतीत्यर्थः । कुतः ? अङ्गेन च जीवितेन च समं सहैवातर्कितामविचारितां गतिं गतोऽसि इह मृतशरीरमपि नास्ति, कस्य मण्डनमिति भावः ॥ २२ ॥

ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः ।
मधुना सह सस्मितां कथां नयनोपान्तविलोकितं च यत् ॥२३॥

ऋजुतामिति ॥ शरमृजुतामार्जवं नयत उत्सङ्गे निषण्णमङ्कगतं धनुर्यस्य तस्य । 'धनुषश्च' (पा. ५।४।१३२) इत्यनङादेशः । ते तव मधुना वसन्तेन सह । 'मधुर्दैत्ये वसन्ते च चैत्रे च' इति विश्वः । सस्मितां कथामालापं तथा यन्नयनोपान्तविलोकितमपाङ्गवीक्षणम्, 'ते' इत्यनुषङ्गः । तच्च स्मरामि ॥ २३ ॥

क्व नु ते हृदयंगमः सखा कुसुमायोजितकार्मुको मधुः ।
न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥२४॥

क्वेति ॥ हृदयं गच्छतीति हृदयंगमो हृद्यः । खच्प्रकरणे 'गमेः सुप्युपसंख्यानम्' (वा. २००९) इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' (पा.६।३।६७) इति मुमागमः । ते तव सखा कुसुमैरायोजितमारचितं कार्मुकं येन स कार्मुकनिर्माता मधुर्वसन्तः क्व नु क्व वा? गत इति शेषः । अथवा सोऽप्युग्ररुषा तीव्रकोपेन पिनाकिनेश्वरेण सुहृदा मदनेन गतां प्राप्तां गतिम्, भस्मतामित्यर्थः । न गमितः खलु, न प्रापितः किम्? 'जिज्ञासानुनये खलु' इत्यमरः ॥ २४ ॥

अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवाहतः ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥ २५ ॥

अथेति ॥ अथ तैः परिदेविताक्षरैर्विलापवचनैर्हृदये दिग्धशरैर्विषलिप्तमुखैः शरैरिवाहतः सन् । 'विषाक्ते दिग्धलिप्तकौ' इत्यमरः । मधुर्वसन्त आतुरामापन्नां रतिमभ्युपपत्तुमनुग्रहीतुम्, आश्वासयितुमित्यर्थः । 'अभ्युपपत्तिरनुग्रहः' इत्यमरः । आत्मानं पुरोऽदर्शयत्, आविरभूदित्यर्थः ॥ २५ ॥

तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥ २६ ॥

तमिति ॥ सा रतिस्तं मधुमवेक्ष्य दृष्ट्वा भृशं रुरोद । स्तनौ संबाध्य स्तनसंबाधम् । 'परिक्लिश्यमाने च' (पा. ३।४।५५) इति णमुल् । उरो जघान

---

पाठा०—१ निषङ्ग; निषक्त. २ विलोकितानि च. ३ दिग्धफलैः. ४ इवार्दितः. ५ गुरु.

नञ्समासः। अमन्त्रवर्जम्, मन्त्रान्न वर्जयित्वेत्यर्थः। 'द्वितीयायां च' (पा. ३।४।५३) इति णमुल्प्रत्यय इत्याह न्यासकारः–'अनुदात्तं पदमेकवर्जम्' (पा. ६।१।१५८) इत्यत्र। प्रत्यग्रहीत्स्वीकृतवान् ॥ ७२ ॥

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधदक्षैः[1] ।
वेलासमीपं[2] स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ ७३ ॥

दुकूलेति ॥ अथ दुकूलवासाः, दुकूलं वसान इत्यर्थः। स हरो विनीतैरनुद्धतैरवरोधेषु ये दक्षास्तैरवरोधदक्षैर्वधूसमीपं निन्ये नीतः। कथमिव? स्फुटा फेनानां राजिर्यस्य स उदकमस्यास्तीत्युदन्वान् समुद्रः। 'उदन्वानुदधौ च' (पा. ८।२।१३) इति निपातनात्साधु। नवैरचिरोदितैश्चन्द्रकिरणैर्वेलासमीपमिव ॥ ७३ ॥

तया प्रवृद्धाननचन्द्रकान्त्या[3] प्रफुल्लचक्षुःकुमुदः कुमार्या ।
प्रसन्नचेतःसलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥ ७४ ॥

तयेति ॥ आननं चन्द्र इवेत्युपमितसमासः। प्रवृद्धा आननचन्द्रस्य कान्तिर्यस्यास्तया तथोक्तया तया कुमार्या, शरदा लोक इव संसृज्यमानः संगच्छमानः शिवश्चक्षूंषि कुमुदानीव तानि प्रफुल्लानि यस्य स तथोक्तः। चेतः सलिलमिव तत्प्रसन्नं यस्य स तथोक्तः प्रसन्नचेतःसलिलोऽभूत्। शरल्लोकयोरपि यथोचितं विशेषणानि योज्यानि ॥ ७४ ॥

तयोः समापत्तिषु कातराणि किंचिद्व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणां[4] तत्क्षणमन्वभूवन्नन्योन्यलोलानि विलोचनानि ॥ ७५ ॥

तयोरिति ॥ तयोर्वधूवरयोः समापत्तिषु यदृच्छया संगतिषु कातराणि चकितानि। 'अधीरे कातरः' इत्यमरः, द्रष्टुमसमर्थानीति भावः। किंचिदीषद्व्यवस्थापितानि स्थिरीकृतानि पश्चात्संहृतानि निवर्तितानि चेति व्यवस्थापितसंहृतानि। 'पूर्वकाल–' (पा. २।१।४९) इत्यादिना तत्पुरुषः। अन्योन्यस्मिँल्लोलानि सतृष्णानि। 'लोलश्चलसतृष्णयोः' इत्यमरः। विलोचनानि दृष्टयस्तत्क्षणं तस्मिन्क्षणे ह्रीयन्त्रणां ह्रिया निमित्तेन संकोचमन्वभूवन् ॥ ७५ ॥

---

पाठा०—१ पक्षैः. २ सकाशम्. ३ विवृद्ध. ४ आनशिरे मुहूर्तम्; आनशिरे मनोज्ञाम्.

तस्याः करं शैलगुरूपनीतं जग्राह ताम्राङ्गुलिमष्टमूर्तिः ।
उमातनौ[1] गूढतनोः स्मरस्य तच्छङ्किनः[2] पूर्वमिव प्ररोहम् ॥ ७६ ॥

तस्या इति ॥ अष्टमूर्तिः शिवः । तस्मादीश्वराच्छङ्कत इति तच्छङ्किनः, तद्भीतस्येत्यर्थः । अत एवोमातनावुमाशरीरे गूढतनोर्गुप्तशरीरस्य स्मरस्य पूर्वं प्ररोहमिव प्रथमाङ्कुरमिव स्थितं शैलगुरूपनीतं शैलगुरुणा हिमवतोपनीतं प्रापितम् । अथवा शैलगुरुणा हिमवत्पुरोधसोपनीतं ताम्राङ्गुलिं रक्ताङ्गुलिं तस्याः पार्वत्याः करं जग्राह ॥ ७६ ॥

रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः[3] पुंगवकेतुरासीत् ।
वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य ॥ ७७ ॥

रोमोद्गम इति ॥ उमाया रोमोद्गमो रोमाञ्चः प्रादुरभूत् । पुमान् गौः पुंगवो वृषभः । 'गोरतद्धितलुकि' (पा. ५।४।९२) इति टच् । स केतुश्चिह्नं यस्य स पुंगवकेतुः शिवः स्विन्नाङ्गुलिरासीत् । अत्रोत्प्रेक्षते—पाणिसमागमेन पाण्योः संस्पर्शेन कर्त्रा । तयोर्वधूवरयोर्मनोभवस्य वृत्तिरवस्थितिः समं विभक्तेव, समीकृतेवेत्यर्थः । प्राक्सिद्धस्याप्यनुरागसाम्यस्य संप्रति तत्कार्यदर्शनात्पाणिसंस्पर्शकृतत्वमुत्प्रेक्षते । ननु 'कन्या तु प्रथमसंगमे स्विन्नकरचरणा भवति, पुमांस्तु रोमाञ्चितो भवति' इति वात्स्यायनेन विपरीतमुक्तमिति चेत्,–नैष दोषः; 'एभिरनयोर्भावं परीक्षेत' इति वाक्यशेष 'एभिः' इति बहुवचनेन स्वेदरोमाञ्चग्रहणस्य सकलसात्त्विकोपलक्षणत्वावगमेनानियमावधारणात् । अत एव रघुवंशेऽन्यथाभिधानात्स्वोक्तिविरोध इत्यपास्तम् । तदेतद्रघुवंशसंजीविन्यां (७।२२) सुव्यक्तमवोचम् । सात्त्विकास्तु 'स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥' इति ॥ ७७ ॥

प्रयुक्तपाणिग्रहणं यदन्यद्वधूवरं पुष्यति कान्तिमग्र्याम् ।
सांनिध्ययोगादनयोस्तदानीं किं कथ्यते श्रीरुभयस्य तस्य ॥ ७८ ॥

प्रयुक्तेति ॥ यद्यस्मात्कारणात्प्रयुक्तं पाणिग्रहणं यस्य तत्तथोक्तमन्यल्लौकिकं वधूश्च वरश्च वधूवरम् । समाहारे द्वन्द्वैकवद्भावः । तदानीं पाणिग्रहणकालेऽनयोरुमाशिवयोः सांनिध्ययोगात्संनिधिभावादग्र्यामुत्तमां कान्तिं शोभां पुष्यति

---

पाठा०—१ उमातमना. २ तच्छङ्कितः. ३ चित्राङ्गुलिः.

पुष्णाति तस्योभयस्योमामहेश्वररूपस्य मिथुनस्य श्रीः किं कथ्यते ? यत्प्रसादाद्-न्यस्य शोभालाभस्तस्य शोभा किमु वक्तव्येत्यर्थः । 'विवाहसमये गौरीशिवौ वधूवरावनुप्रविशेताम्' इत्यागमः॥ ७८ ॥

प्रदक्षिणप्रक्रमणात्कृशानोरुदर्चिषस्तन्मिथुनं चकासे[1] ।
मेरोरुपान्तेष्विव[2] वर्तमानमन्योन्यसंसक्तमहस्त्रियामम् ॥ ७९ ॥

प्रदक्षिणेति ॥ तन्मिथुनमुदर्चिष उन्नतज्वालस्य कृशानोः कर्मणः प्रदक्षिण-प्रक्रमणात्प्रदिक्षिणीकरणाच्चकासे । किमिव ? मेरोरुपान्तेषु परिसरेषु वर्तमान-मावर्तमानम्, मेरुं प्रदक्षिणीकुर्वदित्यर्थः । अन्योन्येन संसक्तं संगतम् । मिथुनस्याप्येतद्विशेषणम् । अहश्च त्रियामा चाहस्त्रियामं रात्रिंदिवमिव । समाहारे द्वन्द्वैकवद्भावः ॥ ७९ ॥

तौ दम्पती त्रिः परिणीय वह्निमन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधास्तस्मिन्समिद्धार्चिषि लाजमोक्षम् ८०

ताविति ॥ स पुरस्तादेव हितं विधत्त इति पुरोधाः पुरोहितोऽन्योन्यस्य संस्पर्शेन स्पर्शसुखेन निमीलिताक्षौ तौ जाया च पतिश्च दम्पती कर्मभूतौ । जायाशब्दस्य दम्भावो निपातितः । वह्निं त्रिस्त्रिवारम् । 'द्वित्रिचतुर्भ्यः सुच्' (पा. ५।४।१८) इति सुच् प्रत्ययः । परिणीय परितो नीत्वा, प्रदक्षिणीकार्येत्यर्थः । नयतेर्द्विकर्मकाल्ल्यप् । समिद्धार्चिषि दीप्तज्वाले तस्मिन्वह्नौ वधूं लाजमोक्षं लाजविसर्गं कारयामास । 'हृक्रोरन्यतरस्याम्' (पा. १।४।५३) इति विकल्पादणि-कर्तुः कर्मत्वम् ॥ ८० ॥

सा लाजधूमाञ्जलिमिष्टगन्धं गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥ ८१ ॥

सेति ॥ सा वधूर्गुरोः पुरोधस उपदेशात्, इष्टः, घ्राणतर्पण इत्यर्थः । गन्धो यस्य तं लाजधूमाञ्जलिं वदनं निनाय कपोलसंसर्पिणी शिखा यस्य स तथोक्तः स धूमस्तस्या गौर्या मुहूर्तकर्णोत्पलतां प्रपेदे । धूमस्य विसृमरत्वान्मुहूर्त-ग्रहणम् ॥ ८१ ॥

---

पाठा०—१ बभासे. २ मेरोरिवान्तपरिवर्त.

तदीषदार्द्रारुणगण्डलेखमुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
वधूमुखं क्रान्तयवावतंसमाचारधूमग्रहणाद्बभूव ॥ ८२ ॥

तदिति ॥ तद्वधूमुखमाचारधूमग्रहणादाचारप्राप्तधूमत्वादीषदार्द्रे स्विन्ने अरुणे च गण्डलेखे गण्डस्थले यस्य तत्तथोक्तम् । अक्ष्णोरुच्छ्वास्युद्गच्छन्कालाञ्जनस्य रागो रञ्जनं यस्य तत्तथोक्तम् । क्रान्तो यवावतंसो यवाङ्कुरकर्णपूरो यस्य तत्तथाभूतं बभूव । 'लाजाञ्जलिं विसृज्य धूमाग्रं समाजिघ्रेत्' इति प्रयोगवृत्तिकारः ॥ ८२ ॥

वधूं द्विजः प्राह तवैष वत्से! वह्निर्विवाहं प्रति कर्मसाक्षी[1] ।
शिवेन भर्त्रा सह धर्मचर्या कार्या त्वया मुक्तविचारयेति ॥ ८३ ॥

वधूमिति ॥ अथ वधूं द्विजः पुरोधाः प्राह । किमिति ? । हे वत्से! एष वह्निस्तव विवाहं प्रति, विवाहकर्मणीत्यर्थः । कर्मसाक्षी कर्मद्रष्टा । भर्त्रा शिवेन सह मुक्तविचारया निर्विचारया त्वया धर्मचर्या धर्माचरणं कार्या कर्तव्येति । अयं च प्राजापत्यविवाहो द्रष्टव्यः । यथाहाश्वलायनः (गृह्य. १।६१)—'सह धर्मं चरतमिति प्राजापत्यः' इति ॥ ८३ ॥

आलोचनान्तं श्रवणे[2] वितत्य पीतं गुरोस्तद्वचनं भवान्या ।
निदाघकालोल्बणतापयेव[3] माहेन्द्रमम्भः प्रथमं पृथिव्या ॥ ८४ ॥

आलोचनान्तमिति ॥ भवस्य पत्न्या भवान्या । 'इन्द्रवरुणभवशर्वरुद्र–' (पा. ४।१।४) इत्यादिना ङीष्, आनुगागमश्च । आलोचनान्तं नेत्रान्तपर्यन्तम् । 'आङ् मर्यादाभिविध्योः' (पा. २।१।१३) इत्यव्ययीभावः । श्रवणे श्रोत्रे वितत्य विस्तार्य तत्पूर्वोक्तं गुरोर्याज्ञिकस्य वचनं 'सह धर्मं चर' इति वाक्यं निदाघकाले ग्रीष्मकाले उल्बणतापयोत्कटसंतापया पृथिव्या प्रथममाद्यं माहेन्द्रं पार्जन्यमम्भ इव पीतम्, अत्यादरेण शुश्रावेत्यर्थः ॥ ८४ ॥

ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य ह्रीसन्नकण्ठी[4] कथमप्युवाच ॥ ८५ ॥

ध्रुवेणेति ॥ प्रियं दर्शनं यस्य कर्मभूतस्य तेन प्रियदर्शनेन ध्रुवेण शाश्वतेन

---

पाठा०—१ पूर्वसाक्षी. २ श्रवणौ. ३ तप्तयेव. ४ कण्ठम्.

भर्त्रा ध्रुवस्य नक्षत्रविशेषस्य दर्शनाय। 'ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु' इत्यमरः। प्रयुज्यमाना 'दृश्यताम्' इति प्रेर्यमाणा ह्रीसन्नकण्ठी ह्रिया हीनस्वरा सा वधूः कथमप्याननमुन्नमय्य 'दृष्टः' इत्युवाच ॥ ८५ ॥

इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ॥ ८६ ॥

इत्थमिति ॥ इत्थमनेन प्रकारेण 'इदमस्थमुः' (पा. ५।३।२४) इति थमुप्रत्ययः। विधिज्ञेन विवाहप्रयोगज्ञेन, शास्त्रज्ञेनेत्यर्थः। पुरोहितेन हैमवतेन प्रयुक्तपाणिग्रहणोपचारौ कृतविवाहकर्माणौ प्रजानां पितरौ तावुमामहेश्वरौ पद्मासनस्थाय पद्मासनोपविष्टाय पितृणां पित्रे पितामहाय ब्रह्मणे। 'पितामहो विरिञ्चौ स्यात्तातस्य जनकेऽपि च' इति विश्वः। पितृव्यमातुलमातामहपितामहाः' (पा. ४।२।२६) इति निपातनात्साधु। प्रणेमतुर्नमश्चक्रतुः। पितामहस्य पित्रोरपि पूज्यत्वादिति भावः ॥ ८६ ॥

वधूर्विधात्रा प्रतिनन्द्यते स्म कल्याणि! वीरप्रसवा भवेति ।
वाचस्पतिः सन्नपि[1] सोऽष्टमूर्तौ त्वाशास्य[2]चिन्तास्तिमितो बभूव ॥ ८७ ॥

वधूरिति ॥ वधूः कन्या विधात्रा ब्रह्मणा, हे कल्याणि शोभने! वीरः प्रसवोऽपत्यं यस्याः सा वीरप्रसवा वीरसूर्भवेति प्रतिनन्द्यते स्म, आशिषमुक्तेत्यर्थः। स विधाता वाचस्पतिर्वागीश्वरोऽपि सन्। 'कस्कादिषु' (पा. ८।३।४८) पाठात्साधुः। अष्टमूर्तौ शिवे त्वाशास्यमाकाङ्क्ष्यं तत्र चिन्ता विचारस्तस्यां स्तिमितो मन्दो बभूव, तस्य निरीहस्याभावादाशिषि स्तिमितत्वमित्यर्थः ॥ ८७ ॥

क्लृप्तोपचारां चतुरस्रवेदीं तावेत्य पश्चात्कनकासनस्थौ ।
जायापती लौकिकमेषणीय[3]मार्द्राक्षतारोपणमन्वभूताम् ॥ ८८ ॥

क्लृप्तेति ॥ तौ जायापती वधूवरौ पश्चान्नमस्कारानन्तरं क्लृप्ता रचिता उपचाराः पुष्परचनादयो यस्यां तां चतुरस्रवेदीमेत्य प्राप्य कनकासनस्थौ सन्तौ लौकिकं लोके विदितम्, आचारप्राप्तमित्यर्थः। अत एवैषणीयमाशास्यम्, 'तथाहि लौकिकाचारं मनसापि न लङ्घयेत्' इति शास्त्रादवश्यकर्तव्यमित्यर्थः। इषेरिच्छार्थादनीयप्रत्ययः। आर्द्राक्षतारोपणमन्वभूताम् ॥ ८८ ॥

पाठा०—१ उन्नत. २ मूर्तावाशास्य. ३ एषितव्यम्.

पत्रान्तलग्नैर्जलबिन्दुजालैराकृष्टमुक्ताफलजालशोभम् ।
तयोरुपर्यायतनालदण्डमाधत्त लक्ष्मीः कमलातपत्रम् ॥ ८९ ॥

पत्रान्तेति ॥ लक्ष्मीः श्रीदेवी पत्रान्तेषु दलप्रान्तेषु लग्नैर्जलबिन्दुजालैराकृष्टाऽपहृता मुक्ताफलजालेन प्रान्तलम्बिना मुक्ताकलापेन या शोभा सा येन तत्तथोक्तमायतं दीर्घं नालमेव दण्डो यस्य तत्कमलमेवातपत्रं तत्तयोरुपर्याधत्त दधौ ॥ ८९ ॥

द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव ।
संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥ ९० ॥

द्विधेति ॥ अथ सरस्वती वाग्देवी द्विधा संस्कृतप्राकृतरूपेण द्वैविध्येन प्रयुक्तेनोच्चारितेन वाङ्मयेन शब्दजालेन तन्मिथुनं नुनाव तुष्टाव । 'णु स्तुतौ' इति धातोर्लिट् । केन कमित्यत्याह—संस्कारेति ॥ संस्कारेण शास्त्रव्युत्पत्त्या पूतेन प्रकृतिप्रत्ययविभागशुद्धेन संस्कृतेनेत्यर्थः । वरेण्यं वरणीयम्, श्लाघ्यमित्यर्थः । वृणोतेरौणादिको 'वृञ एन्य' इति एन्यप्रत्ययः । वरं वोढारं शिवम् । सुखेन ग्राह्यं सुबोधं निबन्धनं रचना यस्य तेन वाङ्मयेन, प्राकृतभाषयेत्यर्थः । वधूं नुनावेत्यनेन संबन्धः ॥ ९० ॥

तौ संधिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् ।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् ॥ ९१ ॥

ताविति ॥ तौ दंपती संधिषु मुखादिनिर्वहणान्तेषु पञ्चसंधिषु । तदुक्तं दशरूपके (१।२४)—'मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः' इति । व्यञ्जितवृत्तिभेदं स्फुटीकृतकौशिक्यादिवृत्तिविशेषम्, रसानुगुण्येनेति शेषः । तदुक्तं भूपालेन—'कौशिकी स्यात्तु शृङ्गारे रसे वीरे तु सात्त्वती । रौद्रबीभत्सयोर्वृत्तिर्नियतारभटी पुनः । शृङ्गारादिषु भावज्ञैः रसेष्विष्टा तु भारती ॥' तथा—'कैशिक्यारभटी चैव सात्त्वती भारती तथा । चतस्रो वृत्तयो ज्ञेयास्तासु नाट्यं प्रतिष्ठितम् ॥' इति । रसान्तरेषु शृङ्गारादिरसभेदेषु 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । 'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताख्या रसाः पूर्वैरुदाहृताः' इति । प्रतिबद्धरागं प्रतिनियमेन बद्धः प्रवर्तितो वसन्तललितादिरागो यस्मिंस्तम् । यस्मिन्रसे यो रागो विहितस्तदनुसारेण

पाठा०—१ वृन्दैः. २ भक्तिशोभम्.

प्रयुक्तरागमित्यर्थः । यथाह काहलः—'रौद्रेऽद्भुते तथा वीरे पुंरागेण प्रगीयते । शृङ्गारहास्यकरुणाः स्त्रीरागेण प्रकीर्तिताः ॥ भयानके च बीभत्से शान्ते गेयो नपुंसके ॥' इति । ललिताङ्गहारं मधुराङ्गविक्षेपम् । 'अङ्गहारोऽङ्गविक्षेपः' इत्यमरः । आदौ भवमाद्यम्, रूपकान्तरप्रकृतिभूतमित्यर्थः । तदुक्तं—'आहुः प्रकरणादीनां नाटकप्रकृतिं बुधाः' इति अप्सरसामुर्वश्यादीनाम् । प्रयुज्यत इति प्रयोगो रूपकम्, नाटकमित्यर्थः । आद्यमिति विशेषणात् । तं मुहूर्तमपश्यतां दृष्टवन्तौ । 'पाघ्राध्मास्था–'(पा.७।३।७८) इत्यादिना दृशेः पश्यादेशः ॥ ९१ ॥

देवास्तदन्ते हरमूढभार्यं किरीटबद्धाञ्जलयो निपत्य ।
शापावसाने [1]प्रतिपन्नमूर्तेर्ययाचिरे पञ्चशरस्य सेवाम् ॥ ९२ ॥

देवा इति ॥ देवा इन्द्रादयस्तदन्ते तस्य प्रयोगदर्शनस्यान्तेऽवसान ऊढभार्यं परिणीतदारं हरं किरीटेषु बद्धा अञ्जलयो येषां ते तथोक्ताः सन्तः । निपत्य प्रणम्य शापावसाने प्रतिपन्नमूर्तेर्लब्धशरीरस्य, 'परिणेष्यति पार्वतीं यदा'(४।४२) इत्यादिना शापस्य पार्वतीपरिणयान्तत्वादित्यर्थः । पञ्चशरस्य कामस्य कर्तुः । सेवां ययाचिरे, पुनः समासादितशरीरस्य तस्य सेवा स्वीक्रियतामिति प्रार्थयामासुरित्यर्थः । 'दुह्याच्पच्–' (वा०१०९०।९१) इत्यादिना द्विकर्मकत्वम् ॥ ९२ ॥

तस्यानुमेने भगवान्विमन्युर्व्यापारमात्मन्यपि सायकानाम् ।
[2]कालप्रयुक्ता खलु [3]कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति ॥९३॥

तस्येति ॥ विमन्युर्विगतक्रोधो भगवानीश्वर आत्मन्यपि तस्य कामस्य सायकानां व्यापारमनुमेने । तथा हि—कार्यविद्भिः कार्यज्ञैः, अथवा कालविद्भिः अवसरज्ञैः । काले योग्यावसरे प्रयुक्तानुष्ठिता भर्तृषु स्वामिषु विषये विज्ञापना सिद्धिमेति खलु, सफला भवतीत्यर्थः । अयमेवास्य स्मरसेवास्वीकारो यदात्मन्यपि तत्सायकव्यापारमङ्गीकृतवानिति ॥ ९३ ॥

अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामा[4]ददानः करेण ।
कनककलश[5]युक्तं भक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात् ॥ ९४ ॥

---

पाठा०—१ प्रतिलब्ध. २ काले प्रयुक्ता. ३ कालविद्भिः. ४ आदधानः. ५ रक्षा.

अथेति ॥ अथेन्दुमालिरीश्वरस्तान्विबुधगणान्विसृज्य क्षितिधरपतिकन्यां पार्वतीं करेणाददानः कनककलशयुक्तं मङ्गलार्थमन्तर्निहितहेममयपूर्णकुम्भं भक्तयः पुष्पादिरचनास्तासां शोभया सनाथम्, सहितमित्यर्थः। क्षितिविरचितशय्यं क्षितौ विरचिता स्थण्डिले कल्पिता शय्या तल्पं यस्मिंस्तत्तथोक्तं कौतुकागारमागाच्छय्यागृहं जगाम। अत्राश्वलायनः (गृह्य.१।८।१०)—'अत ऊर्ध्वमक्षारालवणाशिनावधःशायिनौ ब्रह्मचारिणो स्याताम्' इति। अत ऊर्ध्वं विवाहादूर्ध्वम्, आ त्रिरात्रादिति शेषः। 'त्रिरात्रं द्वादशरात्रं वा' (याज्ञ० प्रा०१।८) इति वचनात्। तथा कामशास्त्रेऽपि—'अथ परिणयरात्रौ प्रक्रमेत्नैव किंचित्तिसृषु च रजनीषु स्तब्धभावा दुनोति। त्रिदिनमिह न भिन्द्याद्ब्रह्मचर्यं न चास्या हृदयमननुरुध्य स्वेच्छया नर्म कुर्यात्॥' इति ॥ ९४ ॥

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः।
अपि शयनसखीभ्यो दत्तवाचं कथंचि-
त्प्रमथमुखविकारैर्हासयामास गूढम् ॥ ९५ ॥

नवेति ॥ तत्र कौतुकागार ईश ईश्वरो नवपरिणयेन नवोद्वाहेन या लज्जा सा भूषणं यस्यास्तामत एव तेनेश्वरेण कृताक्षेपं कृताकर्षणम्, उन्नमितमिति यावत्। वदनमपहरन्तीं साचीकुर्वन्तीम्। अयं लज्जानुभावः। अनुभावान्तरमाह—शयनसखीभ्योऽपि शयने सहशायिनीभ्योऽपि, नर्मसहचरीभ्योऽपीत्यर्थः। कथंचित्कृच्छ्रेण दत्तवाचं दत्तोत्तरां गौरीं प्रमथा भृङ्गिरिटिप्रभृतयो हास्यरसादिदेवताः पशुपतेः पारिषदाः। यथाह भरतः—'शृङ्गारो विष्णुदैवत्यो हास्यः प्रमथदैवतः' इति। 'प्रमथाः स्युः पारिषदाः' इत्यमरः। तेषां मुखविकारैर्मुखविकृतचेष्टितैर्गूढमप्रकाशं हासयामास, हासाद्युपायैर्लज्जामपाकर्तुं प्रवृत्त इत्यर्थः। यथाह गोनर्दः—'हासेन मधुना नर्मवचसा लज्जितां प्रियाम्। विलुप्तलज्जां कुर्वीत निपुणैश्च सखीजनैः॥' इति ॥ ९५ ॥

इति श्रीमन्महोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये उमापरिणयो नाम सप्तमः सर्गः।

---

श्रीः ।

# कुमारसंभवम्

## सीतारामकविकृतया

## संजीविन्या समेतम्

## अष्टमः सर्गः ।

शिरसा शकलं शशाङ्कमूर्तेर्भसितं बिभ्रतमङ्गकेन भूरि ।
गरलं च गलेन चिन्तयामो हरमर्धाङ्गहराद्रिराजकन्याम् ॥

टीका सत्सु मल्लिनाथकृतिना संजीविनीसंज्ञिका
या सर्गेषु कुमारसंभवमहाकाव्यस्य चक्रे पुरा ।
सैवैतद्ध्यवशिष्टदिक्प्रमिततत्सर्गेषु विद्वन्मुदे
सीतारामकवीश्वरेण हि यथाप्रज्ञं समापूर्यते ॥

टिप्प०—1 मल्लिनाथीयमग्रिमाष्टमसर्गस्य व्याख्यानं सीतारामकविसमादृतपाठाद्विभिन्नमूलपाठवत्त्वाच्च ग्रन्थान्ते टीकानुगुणमूलेन समं संयोजितमस्ति। 2 मल्लिनाथः कुमारसंभवकाव्यस्य सप्तमसर्गं यावदेव व्याख्यानमररचदिति सीतारामकव्युक्त्यैतया सुस्फुटमनुमीयते, परं त्वष्टमसर्गटीकापि मल्लिनाथीया ह्येतद्ग्रन्थान्ते संयोजिता यत्रतत्र त्रुटिबहुला वरीवर्तते; तत इयमारेका संभवति—किमिदमष्टमसर्गव्याख्यानं मल्लिनाथीयमन्यत्कर्तृकं वा ? अपि चेन्मल्लिनाथीयं तर्हि सीतारामादिटीकाकृद्भिः किं तदनुपलब्धमासीदिति च। भट्टनारायण—नाथादीनामपि टीका त्वष्टमसर्गावधि लभ्यते, अतः कालिदासप्रणीतं कुमारसंभवमष्टमसर्गपरिमितमेवेत्यर्वाचीनैरनुमन्यते। एतन्मतादरणे हि जिज्ञासा संभवति—को नाम रचयिताऽस्याग्रिमग्रन्थस्य, कथं वा विना कुमारोत्पत्तिवर्णनेन 'कुमारसंभवम्' इति कविकुलालङ्कारेणास्यानन्वर्थाभिधानकरणे हेतुरिति। सप्तसर्गान्तं कुमारसंभवमिति मतं तु 'नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह' (सा. द. ६।३२०) इत्यष्टसर्गान्यूनत्वलक्षितमहाकाव्यलक्षणाव्याप्तिप्रसंगात् 'कुमारसंभवमहाकाव्यस्य' इत्युक्त्या व्याहतमेव भवेत्।

नवपरिणीतगिरिजारहःकेलिमपि विवर्णयिषुस्तत्रभवान्कालिदासोऽष्टमं सर्गमारभते—

पाणिपीडनविधेरनन्तरं शैलराजदुहितुर्हरं प्रति ।
भावसाध्वसपरिग्रहादभूत्कामदोहद[1]मनोहरं वपुः ॥ १ ॥

पाणिपीडनविधेरिति ॥ पाणिपीडनं नाम षोडशविधेषु संस्कारेषु कश्चित्संस्कारविशेषः । पीडयति यस्मिन्निति पीडनम् । 'करणाधिकरणयोश्च' (पा.३।३।११७) इति ल्युट् । पाणेः करतलस्य पीडनं ग्रहणम्, विवाह इत्यर्थः । पाणेरिति कृद्योगलक्षणा कर्मणि षष्ठी, तस्य विधेर्विधानात् । 'विधिर्विधाने दैवे च' इत्यमरः । अनन्तरं पश्चात् । भावसाध्वसयोः कामेच्छातिभययोः परिग्रहात्, परिग्रहं ग्रहणं कृत्वेत्यर्थः । ल्यब्लोपे पञ्चमी । मुग्धत्वादुभे अप्यवलम्ब्येति भावः । 'भावः स्वभावेऽभिप्राये चेच्छासत्तात्मजन्मसु' इति विश्वः । स्थिताया इति शेषः । इयं च मुग्धाभेदो नवोढा । तदुक्तं भानुमिश्रैः—'लज्जाभयपराधीनरतिर्नवोढा' इति । शैलराजस्य हिमालयस्य दुहितुः कन्यायाः पार्वत्या वपुरङ्गम् । हरं शिवं प्रति, लक्षयित्वेत्यर्थः । 'लक्षणेत्थं–' (पा.१।४।९०) इति प्रतेः कर्मप्रवचनीयसंज्ञा । तद्योगे 'कर्मप्रवचनीययुक्ते–'(पा.२।३।८) इति द्वितीया । कामे यद्दोहदमभिलाषः, इच्छेति यावत् । 'अथ दोहदम् । इच्छा काङ्क्षा' इत्यमरः । कामविषयकोऽभिलाष इत्यर्थः । तेन निमित्तेन मनोहरं रुचिकरमभूत्, अतिमनोहराण्यपि कामिनीवपुंषि स्वकामेच्छयैव रोचकानि भवन्तीति भावः । सर्गेऽस्मिन् रथोद्धतावृत्तम् । 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् । रसश्च प्रायः संभोगशृङ्गार एव ॥ १ ॥

इदानीं लक्षणरीत्या नवोढात्वमेव दशभिः प्रपञ्चयति—

व्याहृता प्रतिवचो न संदधे गन्तुमैच्छदवलम्बितांशुका ।
सेवते स्म शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः ॥२॥

व्याहृतेत्यादि ॥ सा पार्वती व्याहृता प्रियेण पृष्टा सती प्रतिवचः प्रत्युत्तरं न संदधे, न दत्तवतीत्यर्थः । तथावलम्बितं करेण धृतमंशुकं वस्त्रं यस्यास्तथोक्ता सती गन्तुमैच्छत् । तथा पराङ्मुखी परिवर्तितवदना सती शयनं पर्यङ्कं सेवते

पाठा०—१ दौहृदसुखं मनोहरम्.

स्म सिषेवे। तथापि तस्यां प्रतिकूलवर्तिन्यामपि सत्यां पिनाकिनो हरस्य रतये प्रमोदाय बभूव, प्रियायाः प्रतिकूलव्यापारैरपि प्रियः प्रसन्न एवाभूदित्यर्थः। तस्य मुग्धास्वभावबोधकुशलत्वादिति भावः ॥ २ ॥

कैतवेन शयिते कुतूहलात्पार्वती प्रति मुखं निपातितम् ।
चक्षुरुन्मिषति सस्मितं प्रिये विद्युताहतमिव न्यमीलयत् ॥३॥

कैतवेनेति ॥ पार्वती कर्त्री। प्रिये हरे कुतूहलात्कैतवेन मिथ्यैव शयिते सुप्ते सति, किमियं कुर्यादित्यभिप्रायेणेति भावः। मुखं प्रेयोमुखं प्रति लक्ष्यीकृत्य निपातितं निक्षिप्तम्, 'किमयं स्वपिति जागर्ति वा?' इत्यभिप्रायादिति भावः। चक्षुः स्वनेत्रं कर्म। अथ च प्रिया इत्याकाङ्क्षावशात्पुनरपि संबध्यते। सस्मितं समन्दहासं यथा स्यात्तथोन्मिषत्युज्जाग्रति सति विद्युताहतमिव प्रतिहतमिवे-त्युत्प्रेक्षा। न्यमीलयत्, मुद्रयति स्मेत्यर्थः ॥ ३ ॥

नाभिदेशनिहितः सकम्पया शंकरस्य रुरुधे तया करः ।
तद्दुकूलमथ चाभवत्स्वयं दूरमुच्छ्वसितनीविबन्धनम् ॥ ४ ॥

नाभिदेश इति ॥ नाभिदेशे निहितः स्थापितः, नीवीमोचनार्थमिति भावः। शंकरस्य करस्तया पार्वत्या सकम्पया सत्या रुरुधे प्रतिरुद्धः। कर्मणि लिट्। अथ च तद्दुकूलं तस्या दुकूलं वस्त्रं कर्तृ। स्वयमात्मना, ननु प्रेरकनियो-गात् दूरमतिशयितमुच्छ्वसितमुद्घाटितं नीव्या बन्धनं यस्य तथोक्तमभवत्, सात्त्विकभावादिति भावः ॥ ४ ॥

एवमालि! निगृहीतसाध्वसं शंकरो रहसि सेव्यतामिति ।
सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये ॥ ५ ॥

एवमिति ॥ सा पार्वती कर्त्री। हे आलि हे सखि पार्वति! त्वया रहसि निगृहीतं त्यक्तं साध्वसं भयं यस्मिन्कर्मणि यथा तथा शंकरः सेव्यतामित्येवंभूतं सखीभिः कर्त्रीभिः। 'न लोक–' (पा. २।३।६९) इति षष्ठीनिषेधः। उपदिष्टमुप देशम्। भावे निष्ठा। प्रिये प्रमुखवर्तिनि सत्याकुला संभ्रान्ता सती नास्मरत् ॥ ५ ॥

---

पाठा०—१ शयने. २ विद्युतेव निहितम्. ३ सशङ्कया. ४ तन्नितम्बम-भवत्तदा; तन्नितम्बमथ चाभवत्.

अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम् ।
वीक्षितेन परिवीक्ष्य पार्वती मूर्धकम्पमयमुत्तरं ददौ ॥ ६ ॥

अपीति ॥ पार्वत्यनङ्गशासनं प्रियं कथायां संभाषणे प्रवृत्तये, लज्जावशान्मां प्रति मौनमाश्रिताया अस्याः संभाषणे कथमपि प्रवृत्त्यर्थमित्यर्थः । अवस्तुन्यप्यलक्ष्यपदार्थेऽपि प्रश्नतत्परं परिवीक्ष्य ज्ञात्वा । ह्वचक्षुषावेक्षणमिहापेक्षितम् । वीक्षितेन प्रियसंमुखमवलोकनेन मूर्ध्नः कम्पस्तन्मयं तद्रूपम्, न हि किंचिन्मयापेक्षितमित्यभिलाषव्यञ्जकमिति भावः । उत्तरं ददौ ॥ ६ ॥

शूलिनः करतलद्वयेन सा संनिरुध्य नयने हृतांशुका ।
तस्य पश्यति ललाटलोचने मोघयत्नविधुरा रहस्यभूत् ॥ ७ ॥

शूलिन इति ॥ रहसि हृतांशुका, रतार्थमिति भावः । अत एव करतलयोर्द्वयेन शूलिनः प्रियस्य नयने, द्वे इति शेषः । संनिरुध्यावृत्य स्थिता सा पार्वती । तस्य ललाटलोचने तृतीये नेत्रे पश्यति सति । मोघो निष्फलो यत्नो यस्या अत एव विधुरा दुःखिता । ततो विशेषणसमासः । अभूत् ॥ ७ ॥

चुम्बनेष्वधरदानवर्जितं खिन्न²हस्तसदयोपगूहनम् ।
क्लिष्टमन्मथमपि प्रियं प्रभोर्दुर्लभप्रतिकृतं वधूरतम् ॥ ८ ॥

चुम्बनेष्विति ॥ चुम्बनेष्वधरदानेनाधरोष्ठखण्डनेन । 'दो अवखण्डने' । भावे ल्युट् । वर्जितं रहितमपि तथा खिन्नहस्तं मन्दप्रचारितकरम्, स्तनयोरिति शेषः । गम्यमानार्थत्वादप्रयोगः । '°पाणिः' इति पाठे भिन्नं पदम् । तदा खिन्नपाण्यपीति योजनीयम् । सदयमगाढं यदुपगूहनमालिङ्गनं तद्यस्मिंस्तादृशमपि । अत एव क्लिष्टः परितोषाभावात्खिन्नो मन्मथः कामो यस्मिंस्तत्तथोक्तमपि । तथा दुर्लभं प्रतिकृतं प्रतीकारो यस्य, रसाभासभियेति भावः । प्रतिकृतमिति भावे निष्ठा । तथोक्तमपि वधूरतं प्रियासुरतं प्रभोः प्रियस्य प्रियं प्रीतिजनकम् । 'इगुपध-' (पा. ३।१।१३५) इति कः । अभूदिति शेषः ॥ ८ ॥

यन्मुखग्रहणमक्षताधरं ³दानमव्रणपदं ⁴नखस्य यत् ।
यद्रतं च सदयं प्रिय⁵स्य तत्पार्वती विषहते स्म नेतरत् ॥ ९ ॥

पाठा०—१ परिगृह्य. २ सन्नहस्तमदयोपगूहने. ३ दत्तम्. ४ नखं च. ५ हरस्य.

यदिति ॥ पार्वती प्रियस्य प्रियकर्तृकम्। 'कर्तृकर्मणोः—' (पा. २।३।६५) इति कर्तरि षष्ठी। अक्षताधरमदष्टाधरोष्ठं यन्मुखस्य ग्रहणं चुम्बनार्थं करेणादानम्। तथाऽव्रणपदमदत्तचिह्नं यन्नखस्य दानम्। इह कर्मणः शेषत्वविवक्षायां षष्ठी। अन्यथा 'न लोक—' (पा. २।३।६९) इति तन्निषेधः प्रसज्जेत। तथा सदयं स्पर्शमात्रविरामं यच्च रतम्। मध्यान्तयोस्तृतीयान्तेन संबन्धः। 'न लोक—' (पा. २।३।६९) इति कृद्योगलक्षणायाः षष्ठ्या बाधात्। तद्विषहते स्म सोढवती। 'लट् स्मे' (पा. ३।२।११८) इति भूतार्थे लट्। 'परिनिविभ्यः' (पा. ८।३।७०) इति षत्वम्। इतरत्कठोरसुखग्रहणादि न विषहते स्मेत्यर्थः ॥ ९ ॥

रात्रिवृत्तमनुयोक्तुमुद्यतं सा प्र[1]भातसमये सखीजनम्।
नाकरोदपकुतूहलं ह्रिया शंसितुं तु[2] हृदयेन तत्वरे ॥ १० ॥

रात्रिवृत्तमिति ॥ प्रभातसमये रात्रिवृत्तं नैशं वृत्तान्तम्। 'वाच्यवद्वर्तने वृत्तं चरित्रच्छन्दसोरपि' इति विश्वः। अनुयोक्तुं प्रष्टुम्। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। उद्यतं सखीजनं सा पार्वती ह्रिया हेतुभूतयाऽपकुतूहलं शमित-जिज्ञासाकौतुकं नाकरोत्, नोत्तरयांचक्र इत्यर्थः। अथ च हृदयेन, मनसा तु कर्त्रा शंसितुमुत्तरं कर्तुं तत्वरे त्वरितम्। भावे लिट् ॥ १० ॥

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः।
प्रेक्ष्य बिम्बमु[3]पबिम्बमात्मनः कानि कानि न[4] चकार लज्जया ॥ ११ ॥

दर्पण इति ॥ किंचेति चार्थः। दर्पणे परिभोगदर्शिनी संभोगचिह्नावलोकिनी सा पार्वती। पृष्ठतो निषेदुषः स्थितवतः प्रणयिनो हरस्य बिम्बं मुख-मण्डलम्। 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः। आत्मन उपबिम्बं बिम्ब-समीपे। 'अव्ययं विभक्ति—'(पा. २।१।६) इति समीपार्थेऽव्ययीभावः। पतितं प्रेक्ष्य लज्जया कानि कानि चेष्टाविशेषचमत्कृतानि न चकार, अपि तु सर्वाणि चकारैवेत्यर्थः ॥ ११ ॥

नीलकण्ठपरिभुक्तयौवनां तां विलोक्य जननी स[5]माश्वसत्।
भर्तृवल्लभतया हि मानसीं मातुरस्यति शुचं वधूजनः ॥ १२ ॥

नीलकण्ठेति ॥ जननी मेना। तां पार्वतीं नीलकण्ठेन शिवेन परिभुक्तं

---

पाठा०—१ विभात. २ च. ३ अनुबिम्बम्. ४ अपि. ५ समाश्वसीत्.

यौवनं यस्यास्तथोक्तां विलोक्य समाश्वसदाश्वासं प्राप, हृष्टवतीति यावत्। तथा हि—वधूजनो मातुर्मानसीं मनसिजां शुचं शोकं भर्तृवल्लभतया भर्तृप्रीतिपात्रतयाऽस्यति क्षिपति। 'असु क्षेपणे' लट्। आत्मजासु पतिप्रसाद एव मातृणां मुदो हेतुरिति भावः ॥ १२ ॥

वासराणि कतिचित्कथंचन स्थाणुना [1]रतमकारि चानया।
ज्ञातमन्मथरसा शनैः शनैः सा मुमोच [2]रतिदुःखशीलताम् ॥१३॥

वासराणीति ॥ कतिचिद्वासराणि दिवसान्। 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः। 'कालाध्वनोः–' (पा.२।३।५) इति द्वितीया। स्थाणुना शिवेन। 'स्थाणू रुद्र उमापतिः' इत्यमरः। अनया पार्वत्या सह कथंचन बलेन रतं सुरतमकारि कृतम्, तदनुकूलरसोत्पत्त्यभावादिति भावः। अथ च सा शनैः शनैर्ज्ञातो मन्मथरसो यया तथा सती रतौ या दुःखशीलता दुरवगाह्यस्वभावता तां मुमोच, स्वयमप्यनुरज्यति स्मेत्यर्थः ॥ १३ ॥

तदेवाह—

सस्वजे प्रियमुरो[3]निपीडनं प्रार्थितं मुखमनेन नाहरत्।
मेखलाप्रणयलोलतां गतं हस्तमस्य शिथिलं रुरोध सा ॥ १४ ॥

सस्वज इति ॥ सा पार्वती। उरसो निपीडनं यस्मिन्कर्मणि यथा स्यात्तथा प्रियं सस्वज आलिङ्गितवती, तथाऽनेन प्रियेण प्रार्थितम् चुम्बनार्थमित्यर्थः। मुखं नाहरन्नावक्रयत्। परंतु मेखलया काञ्च्या सह यः प्रणयः स्नेहस्तत्र या लोलता, जिघृक्षया मन्दप्रसरणमित्यर्थः। तां गतं प्राप्तमस्य प्रियस्य हस्तं पाणिं शिथिलं मन्दं यथा तथा रुरोध, न तु प्रागिवेति भावः॥ १४ ॥

भावसूचितमदृष्टविप्रियं दा[4]र्ढ्यभाक्क्षणवियोगकातरम्।
कैश्चिदेव दिवसै[5]स्तथा तयोः प्रेम [6]गूढमितरेतराश्रयम् ॥ १५ ॥

भावेति ॥ भावेन स्वगतत्वाभिव्यञ्जकचेष्टाविशेषेण सूचितं ज्ञापितम्। 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इति मेदिनी। तथा न दृष्टं विप्रियमौदासीन्यं यत्र। तथा दार्ढ्यं दृढत्वं भजति तथोक्तम्। तथा क्षणवियोगेऽपि

---

**पाठा०**—१ पदमकार्यत प्रिया. २ रत. ३ निपीडितम्; निपीडिता. ४ चाटुतरक्षण; चाटुमत्क्षण. ५ तदा. ६ रूढम्.

कातरम्, तदसहिष्णिवत्यर्थः। गूढं सखीजनानभिज्ञेयं तयोः शिवपार्वत्योः प्रेम स्नेहः। 'प्रेम स्नेहोऽथ दोहदम्' इत्यमरः। कैश्चिदेव दिवसैरितरेतराश्रयं परस्परनिष्ठम्, अभूदिति शेषः ॥ १५ ॥

प्रेम्णः परस्पराश्रयत्वमेव प्रपञ्चयति—

**तं यथात्मसदृशं वरं वधूरन्वरज्यत वरस्तथैव ताम् ।**
**सागरादनपगा हि जाह्नवी सोऽपि तन्मुखरसैकवृत्तिभाक्[1] ॥ १६ ॥**

तमिति ॥ वधूः पार्वती। आत्मसदृशं तं वरं शिवमनु लक्षयित्वा यथा येन प्रकारेणारज्यत। 'रञ्ज रागे' दैवादिकाल्लङ्। वरः शिवस्तां वधूमनु तथैवारज्यत। हि यथा जाह्नवी सागरात्समुद्रादनपगाऽनिवर्तमाना, अस्तीति शेषः। सोऽपि समुद्रोऽपि तस्या जाह्नव्या मुखसंबन्धिनि रस एकां केवलां वृत्तिं भजतीति तथोक्तः, अस्तीति शेषः। उपमालंकारः ॥ १६ ॥

**शिष्यतां निधुवनोपदेशिनः शंकरस्य रहसि प्रपन्नया ।**
**शिक्षितं युवतिनैपुणं तया यत्तदेव[2] गुरुदक्षिणीकृतम् ॥ १७ ॥**

शिष्यतामिति ॥ निधुवनोपदेशिनः सुरतोपदेष्टुः शंकरस्य शिष्यतामुपदेश्यतां प्रपन्नया प्राप्तया तया पार्वत्या रहसि यद्युवतिषु त्रिजगद्विलासिनीषु मध्ये नैपुणं कौशलं शिक्षितमधीतम्। तदेव नैपुणशिक्षणमेव गुरुदक्षिणीकृतं गुरोरदक्षिणा दक्षिणा यथा संपद्यते तथा कृतम्। अभूततद्भावे च्विः। 'अस्य च्वौ' (पा.७।४।३२) इतीकारः। शिवोपयोगित्वेन तत्कृतसुरतारम्भानुगुणसुरतकौशलमेव दक्षिणात्वेन परिणतमिति भावः। इह वाक्यार्थवृत्तिनिदर्शनालंकारः; 'वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना' इत्युक्तत्वात् ॥ १७ ॥

**दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतहस्तपल्लवा ।**
**शीतलेन निरवापयत्क्षणं मौलिचन्द्रशकलेन शूलिनः ॥ १८ ॥**

दष्टमुक्तमिति ॥ अम्बिका पार्वती पूर्वं दष्टं पश्चान्मुक्तमधरोष्ठं वेदनया पीडया विधुतौ कम्पितौ हस्तौ पाणी एव पल्लवौ यया तथोक्ता सती शीतलेन शूलिनः शिवस्य मौलौ यच्चन्द्रस्य शकलं कलारूपं तेन कृत्वा क्षणं निरवापयत्, सुखयति स्मेत्यर्थः ॥ १८ ॥

---

पाठा०—१ निर्वृतिः, २ तत्.

प्रियानुरागव्यञ्जकचेष्टामाह—

चुम्बनादलकचूर्णदूषितं शंकरोऽपि नयनं ललाटजम् ।
उच्छ्वसत्कमलगन्धये ददौ पार्वतीवदनगन्धवाहिने ॥ १९ ॥

चुम्बनादिति ॥ चुम्बनाद्धेतोरलकचूर्णेन केशप्रसाधनचूर्णविशेषेण दूषितमवरुद्धं ललाटजं ललाटे जातम् । 'सप्तम्यां जनेर्डः' (पा.३।२।९७) इति डप्रत्ययः । अलुको वैभाषिकत्वान्नालुक् । नयनं नेत्रम् । उच्छ्वसत्कमलगन्धये विकसत्कमलसुगन्धये, पद्मिनीत्वादिति भावः । 'उपमानाच्च' (पा.५।४।१३७) इतीकारः । 'गन्धो गन्धक आमोदे' इति विश्वः । पार्वत्या वदनमेव गन्धवाही पवनस्तस्मै । 'गन्धवाहानिलाशुगाः' इति कोशनिर्दिष्ट 'गन्धवाह'शब्दस्य गन्धं वहतीति योगालम्बनेन 'गन्धवाहि'शब्देनापि वायुत्वप्रतीतिः । रूढ्यालम्बने त्वण्प्रत्ययान्तस्यैव पवनत्वप्रतीतौ शक्तिमत्त्वादवाचकपददोषप्रसङ्ग इति बोध्यम् । ददौ, तत्राधो रजो निवर्तयितुं स्थापितवानित्यर्थः ॥ १९ ॥

एवमिन्द्रियसुखस्य वर्त्मनः[1] सेवनादनुगृहीतमन्मथः ।
शैलराजभवने सहोमया मासमात्रम्[2] अवसद्वृषध्वजः ॥ २० ॥

एवमिति ॥ एवमिन्द्रियाणि सुखयतीतीन्द्रियसुखः । 'सुख'शब्दात् करोत्यर्थकणिजन्तात्पचाद्यच् । णिज्लोपश्च । तस्य वर्त्मनः सेवनादाचरणाद्धेतोरनुगृहीतः प्रसादितो मन्मथो येन, स्ववपुर्योजनादिति भावः । अत्र 'परिणेष्यति पार्वतीं यदा वपुषा स्वेन नियोजयिष्यति' (४।४२) इति चतुर्थसर्गोक्तमनुसंधेयम् । तथोक्तो वृषध्वजो हरः शैलराजभवने हिमालयगृह उमया पार्वत्या सह मासमात्रं त्रिंशद्दिनात्मकः कालो मासस्तमेवावसत् । 'कालाध्वनोः–'(पा.२।३।५) इति द्वितीया । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः ॥ २० ॥

सोऽनुमान्य[3] हिमवन्तमात्मभूरात्मजाविरहदुःखखेदितम्[4] ।
तत्र तत्र विजहार संपतन्[5] अप्रमेयगतिना ककुद्मता ॥ २१ ॥

स इति ॥ स आत्मभूः शिवः । आत्मजायाः पार्वत्या विरहदुःखेन खेदितं हिमवन्तमनुमान्य तत आज्ञां गृहीत्वा । अप्रमेयवस्त्वेव स्थानेषु वर्तत इत्यपरिच्छेद्या गतिर्गमनव्यापारो यस्य तथाभूतेन ककुद्मता नन्दिना तत्र तत्र पर्वते

पाठा०—१ चात्मनः. २ मासमेकम्. ३ अनुमन्त्र्य. ४ पीडितम्. ५ संचरन्.

संपतन्संचरमाणो विजहार विहारं कृतवान्। इह 'संचरन्' इति पाठोऽसाधुः। 'समस्तृतीयायुक्तात्' (पा. १।३।५४) इति नित्यमात्मनेपदनियमाच्छतुर्दौर्लभ्यात्। अमन्तमार्गपद शेषयित्वा सकर्मकत्वादप्रसङ्ग इति केचित्समर्थयन्ते ॥ २१ ॥

मेरुमेत्य मरुदाशुगोक्षकः पार्वतीस्तनपुरस्कृतान्कृती ।
हेमपल्लवविभङ्गसंस्तरानन्वभूत्सुरतमर्दनक्षमान् ॥ २२ ॥

मेरुमिति ॥ मरुद्विवाशु गच्छतीति मरुदाशुग उक्षा वृषभो यस्य सः। 'शेषाद्विभाषा' (पा. ५।४।१५४) इति कप्। कृती कुशलो हरः। मेरुं सुमेरुम्। 'मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः। एत्यागत्य पार्वत्याः स्तनाभ्यां पुरस्कृतान्पूजितानाश्रयत्वेन स्वीकारात्। अल्पीयसां महत्स्वीकार एव पूजात्वेन परिणमतीति भावः। महतामल्पीयःस्वीकारे को हेतुरित्याशङ्क्य विशेषयति—सुरतेति। सुरतेषु यानि मर्दनानि तेषु क्षमान्सहिष्णून्। हेम्नः पल्लवानां विभङ्गाः खण्डास्तेषां संस्तरानास्तरणान्यन्वभूत्, तत्र सुप्त्वा विजहारेत्यर्थः। अल्पीयसामपि सहिष्णुत्वं हेम्नो विकारत्वात्। अल्पीयस्त्वं तु पदो लवः पल्लव इति श्लिष्टार्थमहिम्ना समर्थ्यते ॥ २२ ॥

पद्मनाभचरणाङ्कितारमसु प्राप्तवत्स्वमृतविप्रुषो नवाः ।
मन्दरस्य कटकेषु चावसत्पार्वतीवदनपद्मषट्पदः ॥ २३ ॥

पद्मनाभेति ॥ हरः। पद्मनाभो हरिः। 'पद्मनाभो मधुरिपुः' इत्यमरः। तस्य चरणाभ्यामङ्किताश्चिह्निता अश्मानो येषाम्। एतेन हरेरपि विहारयोग्यत्वं ध्वन्यते। तथा नवा अमृतविप्रुषोऽमृतबिन्दून्। 'पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्' इत्यमरः। प्राप्तवत्सु, समुद्रमन्थनसाधनत्वादस्येति भावः। मन्दरस्य च कटकेषु नितम्बेषु। 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः। पार्वत्या वदनरूपे पद्मे षट्पदो भ्रमरः सन्। अवसद्वासमकरोत् ॥ २३ ॥

रावणध्वनितभीतया तया कण्ठसक्तदृढबाहुबन्धनः ।
एकपिङ्गलगिरौ जगद्गुरुर्निर्विवेश विशदाः शशिप्रभाः ॥२४॥

रावणेति ॥ जगतां गुरुर्नियन्ता। उत्पत्त्यादित्रिविधकर्मणां गुणभेदेन कारकत्वादिति भावः। शिवः। एकपिङ्गलस्य कुबेरस्य। 'यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः' इत्यमरः। गिरौ कैलासे रावणस्य प्रसिद्धराक्षसस्य ध्वनितात्सिंहना-

---

**पाठा०**—१ आशुवाहनः. २ संस्तराम्. ३ सुरततत्परः क्षपाम्. ४ वलय. ५ मान्दरेषु. ६ वारणस्वनित. ७ मृदु.

दाक्षीतया तया पार्वत्या कण्ठे सक्तं सज्जितं दृढं बाहुबन्धनं यस्य स तथोक्तः सन् विशदाः स्वच्छाः, शारदिका इति भावः । शशिनः प्रभाः कौमुदीर्निर्विवेशोपभुक्तवान् ॥ २४ ॥

तस्य जातु मलयस्थलीरते[1] धूतचन्दनलतः प्रियाक्लमम् ।
आचचाम स[2]लवङ्गकेसरश्चाटुकार इव दक्षिणानिलः ॥ २५ ॥

तस्येति ॥ जातु कदाचित् । तस्य तत्कर्तृके । मलयस्थलीषु रतं सुरतं तत्र सति । धूताः कम्पिताश्चन्दनानां चन्दनवृक्षाणां लताः शाखा येन स तथोक्तः । लवङ्गानां केसरैः किञ्जल्कैः सह वर्तत इति तथोक्तः । दक्षिणानिलो मलयपवनः । चाटुकार इव मधुरभाषीव । प्रियायाः क्लमं खेदमाचचाम, हृतवानित्यर्थः ॥२५॥

हेमतामरसताडितप्रिया तत्कराम्बुविनिमीलितेक्षणा ।
सा[3] व्यगाहत तरङ्गिणीमुमा मीनपङ्क्तिपुनरुक्तमेखला[4] ॥ २६ ॥

हेमेति ॥ सा उमा पार्वती हेम्नस्तामरसेन रक्तोत्पलेन तटोत्पन्नेन ताडितः प्रियो यया सा, परिहासविधित्सयेति भावः । तथा तस्य प्रियस्य कराम्बुना हस्ताक्षिप्तजलेन विनिमीलिते ईक्षणे नेत्रे यया । तथा मीनपङ्क्त्या पुनरुक्ता मेखला रशना यस्यास्तथोक्ता सती। तरङ्गिणीं नदीं व्यगाहत विजगाहे, जलक्रीडां चकारेत्यर्थः । 'तरङ्गिणी शैवलिनी' इत्यमरः ॥ २६ ॥

तां पुलोमतनयालकोचितैः पारिजातकुसुमैः प्रसाधयन् ।
नन्दने चिरमयुग्मलोचनः सस्पृहं सुरवधूभिरीक्षितः[5] ॥ २७ ॥

तामिति ॥ अयुग्मानि विषमाणि, त्रीणीति यावत् । लोचनानि यस्य स तथोक्तः शिवो नन्दने इन्द्रोद्याने पुलोमतनया शची । 'पुलोमजा शचीन्द्राणी' इत्यमरः । तस्या अलकेषु केशेषूचितैः पारिजातकुसुमैः कल्पवृक्षपुष्पैस्तां पार्वतीं प्रसाधयन्भूषयन्, तथा सुरवधूभिर्देवाङ्गनाभिः सस्पृहमीक्षितः सन्, चिरमवसदिति शेषः ॥ २७ ॥

इत्यभौममनुभूय शंकरः पार्थिवं च दयि[6]तासखः सुखम् ।
लोहितायति कदाचिदातपे गन्धमादनवनं[7] व्यगाहत ॥ २८ ॥

---

पाठा०—१ रतेर्धूतचन्दनलतः; रते धूतचन्दनवनः. २ सतुषारशीतलः. ३ खे. ४ मेखलाम्. ५ सुरवधूभिरैक्ष्यत; सुरवधूनिरीक्षितः; सुरवधूभिरैक्षत. ६ वनिता. ७ गिरिम्.

इतीति ॥ शंकरः इत्येवमभौमं स्वर्गीयं तथा पार्थिवं भौमं च सुखम्। दयितासखः सन्ननुभूय कदाचित्समय आतपे सूर्ये लोहितायति रक्तवर्णे जायमाने सति। 'लोहितादिडाज्भ्यः क्यष्' (पा. ३।१।१३) इति क्यष्। गन्धमादनस्य गिरेर्वनं व्यगाहत, तत्र क्रीडितुं जगामेत्यर्थः ॥ २८ ॥

तत्र काञ्चनशिलातलाश्रयो नेत्रगम्यमवलोक्य भास्करम् ।
दक्षिणेतरभुजव्यपाश्रयां व्याजहार सहधर्मचारिणीम् ॥ २९ ॥

तत्रेति ॥ तत्र गन्धमादनवने स हरो भास्करं सूर्यं नेत्रगम्यं नेत्रप्राप्यम्, नेत्रावलोक्यमिति यावत्। अवलोक्य विचार्य। काञ्चनं सौवर्णं शिलातलमाश्रयो यस्य तथोक्तः सन्। दक्षिणेतरो भुजो वामभुजस्तत्र व्यपाश्रयः संबन्धो यस्यास्ताम्, तत्र स्थितामित्यर्थः। सहधर्मचारिणीं पत्नीं पार्वतीं व्याजहारोक्तवान्। 'व्याहार उक्तिर्लपितम्' इत्यमरः ॥ २९ ॥

पद्मकान्तिमरुणत्रिभागयोः[1] संक्रमय्य[2] तव नेत्रयोरिव ।
संक्षये जगदिव प्रजेश्वरः संहरत्यहरसावहर्पतिः ॥ ३० ॥

पद्मेति ॥ हे प्रिये! असौ पुरोवर्त्यहर्पतिः सूर्यः। अरुणौ त्रिभागौ तृतीयांशौ ययोस्तयोस्तव नेत्रयोरिव पद्मकान्तिं कमलशोभां संक्रमय्य तुलयित्वा, कमलप्रतिनिधित्वेन रात्रौ तव नेत्रकमल एव स्थास्यत इति विचार्येति भावः। संक्षये प्रलये प्रजेश्वरो ब्रह्मा जगदिव। अहो दिनं संहरति, स्वस्यास्तंगतत्वादिति भावः। अत्र गम्योत्प्रेक्षा ॥ ३० ॥

सीकरव्यतिकरं मरीचिभिर्दूरयत्यवनते[3] विवस्वति ।
इन्द्रचापपरिवेषशून्यतां निर्झरास्तव पितुर्[4]व्रजन्त्यमी[5] ॥ ३१ ॥

सीकरेति ॥ हे प्रिये! अवनते नम्रीभूते, अस्तंगत इति यावत्। विवस्वति सूर्ये मरीचिभिः स्वकिरणैः सह सीकराणां जलकणानाम्। 'सीकरोऽम्बुकणाः स्मृताः' इत्यमरः। व्यतिकरं संबन्धं दूरयति दूरं कुर्वति सति। अमी पुरोवर्तिनस्तव पितुर्हिमालयस्य निर्झराः प्रवाहा इन्द्रचापेन यः परिवेषः परिधिः। 'परिवेषस्तु परिधिरुपसूर्यकमण्डले' इत्यमरः। तेन शून्यास्तेषां भावस्तत्ता तां व्रजन्ति,

---

पाठा०—१ अरुणान्तभागयोः. २ संगमय्य. ३ धूनयति. ४ प्रसवितुः. ५ ते.

गच्छन्तीत्यर्थः । निर्झरकणपतितसायन्तनकिरणैरुद्भासमानेन्द्रचापपरिधिता सूर्यस्यास्तंगतत्वाद्विलीना इति भावः ॥ ३१ ॥

**दष्टतामरसकेसरस्रजोः[1] क्रन्दतोर्विपरिवृत्तकण्ठयोः[2] ।**
**निघ्नयोः[3] सरसि चक्रवाकयोरल्पमन्तरमनल्पतां गतम् ॥३२॥**

दष्टेति ॥ हे प्रिये ! दष्टा तामरससंबन्धिनां केसराणां स्रक् याभ्यां तयोः । तथा विपरिवृत्तौ परस्परपराङ्मुखीभूतौ कण्ठौ ययोः । तथा निघ्नयोः परस्पराधीनयोः । 'अधीनो निघ्न आयत्तः' इत्यमरः । अत एव क्रन्दतो रुदतोः । तथा सरसि स्थितयोश्चक्रवाकयोरल्पमन्तरं वियोगोऽनल्पतामतिशयिततां गतम्, प्राप्तमित्यर्थः ॥ ३२ ॥

**स्थानमाह्निकमपास्य दन्तिनः सल्लकीविटपभङ्गवासितम् ।**
**आविभातचरणाय[4] गृह्णते वारि वारिरुहबद्धषट्पदम् ॥ ३३ ॥**

स्थानमिति ॥ हे प्रिये ! दन्तिनो गजाः सल्लकीविटपा वृक्षविशेषास्तेषां भङ्गैः खण्डैर्वासितं सुगन्धितमाह्निकं दैनं स्थानमपास्य त्यक्त्वा । विभातमारभ्येत्याविभातं यच्चरणमाचरणम्, सांध्यं कृत्यमिति यावत् । तस्मै तत्कर्तुम् । वारिरुहेषु कमलेषु बद्धाः षट्पदा भ्रमरा यत्र तादृशं वारि जलं गृह्णते, करेणाददत इत्यर्थः । गम्योत्प्रेक्षा ॥ ३३ ॥

**पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे![5] विवस्वता ।**
**लम्बया[6] प्रतिमया सरोम्भसां तापनीयमिव सेतुबन्धनम् ॥ ३४ ॥**

पश्येति ॥ हे मितकथे मिताः परिमिताः कथा यस्यास्तत्संबोधनं हे मितभाषिणि प्रिये ! पश्चिमं दिगन्तं लम्बते तथोक्तेन विवस्वता सूर्येण लम्बया प्रतिमया प्रतिबिम्बेन कृत्वा सरःसंबन्धिनामम्भसां तापनीयं सौवर्णं सेतोर्बन्धनमिव निर्मितम्, कृतमित्यर्थः । इति त्वं पश्य । तरङ्गितसरोजलेषु पतितमत एवाविरलतया सहस्रधा विभक्तं स्वप्रतिबिम्बमेव सूर्यनिर्मितः सेतुरिवेत्युत्प्रेक्षा । 'तपनीयं शातकुम्भम्' इत्यमरः । ततः 'तस्य विकारः' (पा. ४।३।१३४) इत्यण् ॥ ३४ ॥

---

**पाठा०**—१ त्यजोः. २ विरहदीनकण्ठयोः. ३ भिन्नयोः. ४ आविभाति शरणाय गच्छतः सान्ध्यकर्मविधयेऽनुगृह्णते. ५ कथमिदम्. ६ दीर्घया.

**उत्तरन्ति विनिकीर्य पल्वलं गाढपङ्कमतिवाहितातपाः ।**
**दंष्ट्रिणो वनवराहयूथपा दष्टभङ्गुरबिसाङ्कुरा इव ॥ ३५ ॥**

उत्तरन्तीति ॥ हे प्रिये ! गाढः पङ्को यत्र तादृशं पल्वलमल्पसरः । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः । विनिकीर्य, स्वाधिवासेन विक्षिप्तं कृत्वेत्यर्थः । अतिवाहितोऽतिक्रान्त आतपो घर्मो यैः । तथा दंष्ट्रिणः प्रशस्तदंष्ट्रायुक्ताः । वनवराहाणामारण्यकसूकराणां यूथं पान्ति रक्षन्ति ते वनवराहयूथपाः, महान्तो वराहा इत्यर्थः । दष्टा भङ्गुरा भङ्गशीला बिसाङ्कुरा मृणालतन्तवो यैस्ते तथोक्ता इव । उत्तरन्ति निःसरन्ति, अर्थात्सरस इत्यर्थः । अत्र बहिर्दृश्येषु दंष्ट्राङ्कुरेषु बिसाङ्कुरत्वोत्प्रेक्षणादुत्प्रेक्षालंकारः ॥ ३५ ॥

**एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलम्[1] ।**
**हीयमानमहरत्ययातपं पीवरोरु ! पिबतीव बर्हिणः ॥ ३६ ॥**

एष इति ॥ हे पीवरोरु ! वृक्षशिखरे कृतमास्पदं स्थितिर्येन, तत्र स्थित इत्यर्थः । एष पुरोवर्ती बर्हिणो मयूरः । 'मयूरो बर्हिणो बर्ही' इत्यमरः । कर्ता । जातरूपस्य सुवर्णस्य । 'चामीकरं जातरूपम्' इत्यमरः । यो रसो जलं तद्वद्गौरं पीतं मण्डलं बर्हसमूहो यस्य तादृशम् । अह्नो दिवसस्यात्ययः संध्या तस्या आतपं पिबतीवेत्युत्प्रेक्षा । यतो हीयमानम्, अन्यथा कथमस्य हानिः स्यादिति भावः ॥३६॥

**पूर्वभागतिमिरप्रवृत्तिभिर्व्यक्तपङ्कमिव[2] जातमेकतः ।**
**खं हृतातपजलं विवस्वता भाति किंचिदिव शेषवत्सरः ॥३७॥**

पूर्वेति ॥ विवस्वता हृतं शोषितमातपो जलमिव यस्य तादृशं खं व्योम । पूर्वभागे यास्तिमिरप्रवृत्तयस्तमःप्रसारास्ताभिः कृत्वा । एकत एकत्र भागे व्यक्तः पङ्को यत्र तदिव जातं सत् । किंचिच्छेषवदीषज्जलशेषि सर इव भाति । अस्तंगच्छदर्कात्पातपे किंचिज्जलशेषोत्प्रेक्षणपूर्वक उपमालंकारः ॥ ३७ ॥

**आविशद्भिरुटजाङ्गणं[3] मृगैर्मूलसेकसरसैश्च वृक्षकैः ।**
**आश्रमाः प्रविशदग्र्यधेनवो[4] बिभ्रति श्रियमुदीरिताग्नयः ॥३८॥**

आविशद्भिरिति ॥ उटजस्य पर्णशालाया अङ्गणम् । 'पर्णशालोटजोऽस्त्रियाम्'

---

पाठा०—१ मण्डलः. २ लग्नपङ्कम्. ३ उटजाङ्गणे. ४ अग्निधेनवः.

इत्यमरः । आविशद्भिः प्रविशद्भिर्मृगैः । तथा मूलेषु यः सेकः सेचनं तेन सरसा आर्द्रास्तथोक्तैर्वृक्षकैरल्पवृक्षैश्चोपलक्षिताः । तथा प्रविशन्त्योऽग्र्याः श्रेष्ठा धेनवो येषु । तथोदीरिता उद्दीपिताः । सायंहोमार्थमिति भावः अग्नयो गार्हपत्यादयो येषु तथोक्ता आश्रमा ऋषीणां वासस्थानानि । श्रियं बिभ्रति, शोभन्त इत्यर्थः ॥३८॥

बद्धकोशमपि तिष्ठति क्षणं सावशेषविवरं कुशेशयम् ।
षट्पदाय वसतिं ग्रहीष्यते प्रीतिपूर्वमिव दातुमन्तरम् ॥ ३९ ॥

बद्धेति ॥ बद्धकोशं मुकुलितमपि कुशेशयं कमलं कर्तृ । वसतिं ग्रहीष्यते षट्पदाय भ्रमराय प्रीतिपूर्वमन्तरमवकाशम् । 'अन्तरमवकाशावधि–' इत्यमरः । दातुमिवेत्युत्प्रेक्षा । क्षणं सावशेषं विवरं छिद्रं यस्य तथा तिष्ठति ॥ ३९ ॥

दूरमग्रपरिमेयरश्मिना वारुणी दिगरुणेन भानुना ।
भाति केसरवतेव मण्डिता बन्धुजीवतिलकेन कन्यका ॥ ४० ॥

दूरमिति ॥ हे प्रिये ! वारुणी दिक् पश्चिमदिक् । दूरमग्रे परिमेया अल्पत्वात्परिमातुं शक्या रश्मयः किरणा यस्य तादृशेनारुणेन भानुना । केसरवता किञ्जल्कवता बन्धुजीवं बन्धुजीवाख्यवृक्षपुष्पं तदेव तिलकं तेन मण्डिता कन्यकेव भाति ४०

सामभिः सहचराः सहस्रशः स्यन्दनाश्वहृदयंगमस्वनैः ।
भानुमग्निपरिकीर्णतेजसं संस्तुवन्ति किरणोष्मपायिनः ॥४१॥

सामभिरिति ॥ किरणोष्मपायिनः किरणानामूष्माणमेव पिबन्तीति तथोक्ताः । सहस्रशः सहचरा वालखिल्यादय ऋषयः । अग्नौ परिकीर्णं निक्षिप्तं तेजो येन तं भानुं सूर्यम् । स्यन्दनस्य रथस्य संबन्धिनो येऽश्वास्तेषां हृदयंगमा मनोहराः स्वना येषां तैः सामभिः सामवेदैः संस्तुवन्ति, स्तुतिं कुर्वन्तीत्यर्थः ॥ ४१ ॥

सोऽयमानतशिरोधरैर्हयैः कर्णचामरविघट्टितेक्षणैः ।
अस्तमेति युगभुग्नकेसरैः संनिधाय दिवसं महोदधौ ॥ ४२ ॥

सोऽयमिति ॥ सोऽयं सूर्यो दिवसं महोदधौ संनिधाय संस्थाप्य । आनता नम्रीभूता शिरोधरा ग्रीवा येषां तैः । अत एव कर्णयोश्चामरैर्विघट्टिते मुकुलिते

---

पाठा०—१ उत्तरम्. २ दूरलग्न. ३ वारुणा. ४ कुसुमेन. ५ स्यन्दनस्य. ६ स्वरैः. ७ शिरोरुहैः.

ईक्षणे येषां तैः। युगेन स्कन्धधार्यकाष्ठेन भुग्ना मृदिताः केसराः स्कन्धरोमाणि येषां तथोक्तैर्हयैरश्वैः कृत्वा। अस्तमस्ताचलमेति गच्छति। 'अस्तस्तु चरमः क्ष्माभृत्' इत्यमरः ॥ ४२ ॥

खं प्रसुप्तमिव संस्थिते रवौ तेजसो महत ईदृशी गतिः।
तत्प्रकाशयति यावदुद्गतं[1] मीलनाय खलु तावतश्च्युतम्[2] ॥ ४३ ॥

खमिति ॥ हे प्रिये! खं व्योम रवौ संस्थितेऽस्तंगते सति प्रसुप्तमिव भवति। युक्तमेवेत्याह—महतस्तेजस ईदृशी वक्ष्यमाणा गतिरस्ति। सा केत्याह—तत्तेजः कर्तृ। उद्गतमुदितं सत्। यावत्, स्थानमित्यर्थः। प्रकाशयति, च्युतं भ्रष्टमस्तमितं सदिति यावत्। तावतः स्थानस्य मीलनाय संकोचनाय भवति खलु। यत्र तेजस्तिष्ठति तत्प्रकाशते, यतो गच्छति तन्न प्रकाशत इति भावः। उत्प्रेक्षालंकारः ॥४३॥

संध्ययाप्यनुगतं रवेर्वपु[3]र्वन्द्य[4]मस्तशिखरे समर्पितम्।
येन[5] पूर्वमुदये पुरस्कृता नानुयास्यति कथं तमापदि ॥ ४४ ॥

संध्ययेति ॥ संध्ययापि कर्त्र्या अस्तशिखरे समर्पितं निहितं वन्द्यं पूज्यं रवेर्वपुर्मण्डलं कर्म। अनुगतमन्वगामि। योग्यमेवैतदित्याह — पूर्वमुदये प्रातःसमये येन पुरस्कृताऽग्रे कृता संमानिता च। उदये प्रागेव संध्यागम इति प्रसिद्धम्। आपदि विपत्समये, अस्तमय इति यावत्। तं सूर्यं कथं नानुयास्यति? अपि तु यास्यत्येवेत्यर्थः। सतीधर्म एष एवेति भावः ॥ ४४ ॥

रक्तपीतकपिशाः पयोमुचां कोटयः कुटिलकेशि! भान्त्यमूः।
द्रक्ष्यसि त्वमिति संध्यया[6]नया वर्तिका[7]भिरिव साधुमण्डिताः[8] ॥४५॥

रक्तेति ॥ हे कुटिलकेशि प्रिये! अमूः पुरोगताः। रक्ताश्च पीताश्च कपिशाश्च तथोक्ताः, नानावर्णा इत्यर्थः। पयोमुचां कोटयोऽग्रयः। 'स्यात्कोटिरश्रौ चापाग्रे संख्याभेदप्रकर्षयोः' इति विश्वः। भान्ति। तास्त्वं द्रक्ष्यसीति हेतोरनया संध्यया कर्त्र्या। वर्तिकाभिश्चित्रशलाकाभिः साधु यथा तथा मण्डिता इव भूषिताः किमित्युत्प्रेक्षा ॥ ४५ ॥

---

पाठा०—१ उत्थितम्. २ तावता. ३ पदम्. ४ धर्मम्. ५ प्राक्तथेयम्. ६ सांध्यवेलया. ७ वर्णिकाभिः. ८ वर्तिताः.

सिंहकेसरसटासु भू[1]भृतां पल्लवप्रसविषु द्रुमेषु च ।
पश्य धातु[2]शिखरेषु भानुना संविभक्तमिव सांध्यमातपम् ॥४६॥

सिंहेति ॥ हे प्रिये ! भूभृतां पर्वतानां संबन्धिनां सिंहानां केसराः किञ्जल्का इव याः सटाः स्कन्धकेशास्तासु । पल्लवानां प्रसवो येषु तेषु द्रुमेषु च तथा धातुयुक्तेषु शिखरेषु च भानुना संविभक्तं सम्यग्विभज्य दत्तमिव सांध्यमातपं पश्य । केसरादीनामात्मसदृशत्वात्सुहृद्भूततया सूर्योऽस्तगमनसमय आसन्नमृत्युः पुरुष आत्मधनमिव घनीभूतं तात्कालिकमातपं तेभ्यो दत्त्वाऽस्तं गच्छतीति भावः ॥४६॥

[3]अद्रिराजतनये ! तपस्विनः पावनाम्बुविहि[4]ताञ्जलिक्रियाः ।
ब्रह्म गूढम[5]भिसंध्यमादृताः शुद्ध[6]ये विधिविदो गृणन्त्यमी ॥४७॥

अद्रीति ॥ हे अद्रिराजतनये ! विधिविदस्तपस्विनोऽमी ब्राह्मणाः । अभिसंध्यं संध्यामभिव्याप्य । पावनं पवित्रं यदम्बु तेन विहिताऽञ्जलिक्रियार्घ्यदानं यैस्तथोक्ताः । भूत्वेति शेषः । शुद्धय आत्मशुद्धिं कर्तुमादृता आदरयुक्ताश्च सन्तः । गूढं रहस्यभूतं ब्रह्म गायत्रीं गृणन्ति । जपन्तीत्यर्थः ॥ ४७ ॥

तन्मुहूर्तमनुमन्तुमर्हसि प्रस्तुताय नियमाय मामपि ।
त्वां विनोदनिपुणः सखीजनो वल्गुवादिनि ! विनोदयिष्यति ४८

तदिति ॥ हे वल्गुवादिनि मिष्टभाषिणि ! तत्तस्मात्कारणात्प्रस्तुताय सांध्याय नियमाय विधये नियमं कर्तुं मामपि मुहूर्तं क्षणमात्रमनुमन्तुं त्वं गच्छेत्यनुमननं कर्तुमर्हसि । तथा त्वां विनोदे विनोदकरणे निपुणः कुशलः सखीजनो विनोदयिष्यति ॥ ४८ ॥

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगामाललाप विजयाम[7]हेतुकम् ॥ ४९ ॥

निर्विभुज्येति ॥ ततोऽनन्तरं शैलराजतनया पार्वती दशनच्छदमोष्ठं निर्विभुज्य वक्रीकृत्य भर्तुर्वाच्यवधीरणापरा तिरस्कृतिसक्ता, श्रुतमप्यश्रृण्वतीत्यर्थः । समीपगां विजयानाम्नीं सखीम् । अहेतुकं निष्कारणमाललाप, आलापं कृतवतीत्यर्थः ॥४९॥

---

पाठा०—१ भूभृता. २ धातुशिखरेषु चात्मनः; चास्तशिखरे विवस्वता; धातुशिखरेषु चात्मना. ३ पार्ष्णिमुक्तवसुधास्तपस्विनः. ४ रचिता. ५ अभिसांध्यम्. ६ सिद्धये. ७ सहेतुकम्.

ईश्वरोऽपि दिवसात्ययोचितं मन्त्रपूर्वमनुतस्थिवान्विधिम् ।
पार्वतीमवचनामसूयया प्रत्युपेत्य पुनराह सस्मितम् ॥ ५० ॥

ईश्वर इति ॥ दिवसात्यये सायंकाल उचितं विधिं मन्त्रपूर्वं यथा तथाऽनुतस्थिवान्कृतवानीश्वरोऽप्यसूयया मां त्यक्त्वा गत इत्यभिप्रायगर्भितयेर्ष्ययाऽवचनामभाषमाणाम् । 'वच परिभाषणे' कर्तरि ल्युः । पार्वतीं प्रत्युपेत्य समीपमागत्य पुनः सस्मितं यथा तथाहोक्तवान् ॥ ५० ॥

मुञ्च कोपमनिमित्तकोपने ! संध्यया प्रणमितोऽस्मि नान्यया ।
किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मनः ॥ ५१ ॥

मुञ्चेति ॥ हे अनिमित्तकोपनेऽकारणकोपने ! कोपं क्रोधं मुञ्च । यतोऽस्म्यहं संध्यया कन्यां प्रणमितो नान्यया, अहं संध्यावशं गतः, नान्यावशं गतः; अतः कोपं मा कुर्वित्यर्थः । अथ च आत्मनः सहधर्मचारिणं माम्, संध्यां कर्तुं गच्छन्तमिति शेषः । चक्रवाकेन समा वृत्तिर्यस्य तं किं न वेत्सि ? इदानीमुभयोः प्रियाविरहखिन्नत्वादिति भावः ॥ ५१ ॥

निर्मितेषु पितृषु स्वयंभुवा या तनुः सुतनु ! पूर्वमुज्झिता ।
सेयमस्तमुदयं च सेवते तेन मानिनि ! ममात्र गौरवम् ॥ ५२ ॥

निर्मितेष्विति ॥ हे सुतनु ! स्वयंभुवा ब्रह्मणा निर्मितेषु कल्पितेषु पितृषु तनुः सूक्ष्मा या संध्या पूर्वमुज्झिता सेयं संध्यास्तमुदयं च सेवते । तेन कारणेन हे मानिनि ! ममात्र गौरवमादरः, अस्तीत्यर्थः ॥ ५२ ॥

तामिमां तिमिरवृद्धिपीडितां शैलराजतनयेऽधुना स्थिताम् ।
एकतस्तटतमालमालिनीं पश्य धातुरसनिम्नगामिव ॥ ५३ ॥

तामिति ॥ हे शैलराजतनये प्रिये ! तामिमां संध्यामधुनैकतः पूर्वत्र तिमिरवृद्धिपीडितामत एव तटे तमालानां माला यस्यास्तथोक्तां धातूनां गैरिकादीनां रसस्य निम्नगां नदीमिव स्थितां पश्य । उपमालंकारः । मालिनीत्यत्र 'व्रीह्यादिभ्यश्च' (पा. ५।२।११६) इतीनिः ॥ ५३ ॥

---

पाठा०—१ अनुतिष्ठवान्. २ सोऽभ्युपेत्य. ३ प्रयमितः. ४ नान्यथा. ५ उत्थिता. ६ सेव्यते. ७ वृत्ति. ८ भूमिलग्नमिव संप्रति स्थिताम्; भूमिलग्नमिव संप्रतिष्ठिताम्.

सांध्यमस्तमितशेषमातपं रक्तलेखमपरा बिभर्ति दिक् ।
सांपरायवसुधासशोणितं मण्डलाग्रमिव तिर्यगुज्झितम् ॥५४॥

सांध्यमिति ॥ अपरा प्रतीची दिक् । अस्तमितं शेषं च सांध्यम् । तथा रक्ता लेखा पङ्क्तिर्यस्य । तथा सांपराया सांग्रामिकी या वसुधा तत्र सशोणितं सरक्तमत एव तिर्यगुज्झितं त्यक्तं मण्डलस्याग्रमिव स्थितमातपं बिभर्ति ॥ ५४ ॥

यामिनीदिवससंधिसंभवे तेजसि व्यवहिते सुमेरुणा ।
एतदन्धतमसं निरङ्कुशं दिक्षु दीर्घनयने ! विजृम्भते ॥ ५५ ॥

यामिनीति ॥ हे दीर्घनयने प्रिये ! यामिनीदिवसयोः संधौ संध्यायां संभवति तथोक्ते सांध्ये तेजसि सुमेरुणा व्यवहितेऽन्तर्हिते सति निरङ्कुशं निरर्गलमेतत्पुरोवर्त्यन्धतमसं गाढं तमो दिक्षु विजृम्भते प्रसरति, संध्यापि विलीनेत्यर्थः ॥५५॥

नोर्ध्वमीक्षणगतिर्न चाप्यधो नाभितो न पुरतो न पृष्ठतः ।
लोक एष तिमिरौघवेष्टितो गर्भवास इव वर्तते निशि ॥५६॥

नोर्ध्वमिति ॥ निशि तिमिरौघेण वेष्टित एष लोको गर्भवास इव वर्तते । गर्भस्थित इव प्रतिभासमानत्वादिति भावः । यत ईक्षणानां लोकनेत्राणां गतिः प्रसर ऊर्ध्वं न; तथाधोऽपि न; तथाऽभितो वामदक्षिणोऽपि न; तथा पुरतो न; पृष्ठतश्च न, गर्भस्थितवज्जनैः कुत्रापि नावलोक्यत इत्यर्थः । ततो निशावृत्तौ गर्भवृत्तित्वोत्प्रेक्षा ॥ ५६ ॥

शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हृतान्तरम् ॥ ५७ ॥

शुद्धमिति ॥ शुद्धं निर्मलमाविलं मलिनमवस्थितं स्थिरं चलं चरिष्णु वक्रं कुटिलमार्जवगुणेनर्जुत्वगुणेनान्वितं सरलं च यत् तत्सर्वमेव तमसा समीकृतम् । तमोव्याहत्या पृथगभासमानत्वादिति भावः । तथा हि—असतां कादाचित्कमपि महत्त्वं धिक् । यतो हृतान्तरं समीकृतसदसद्गुणम् । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५७ ॥

---

पाठा०—१ संपरायवसुधा सशोणितं. २ उत्थितम्. ३ निरर्गलम्. ४ तिमिरोल्ब. ५ हतान्तरम्; अनन्तराम्.

नूनमुन्नमति[1] यज्वनां पतिः शार्वरस्य तमसो निषिद्धये ।
पुण्डरीकमुखि ! पूर्वदिङ्मुखं[2] कैतकैरिव रजोभिराहतम्[3] ॥५८॥

नूनमिति ॥ हे पुण्डरीकमुखि कमलमुखि प्रिये ! नूनं यज्वनां द्विजानां पतिश्चन्द्रः शार्वरस्य शर्वरीसंबन्धिनस्तमसो निषिद्धये निवृत्तय उन्नमत्युदेति। अत एव कैतकैः केतकसंबन्धिभी रजोभिरिवाहतं व्याप्तं पूर्वदिशो मुखम्, पश्येति शेषः ५८

मन्दरान्तरितमूर्तिना निशा लक्ष्यते शशभृता सतारका ।
त्वं मया प्रियसखीसमागता श्रोष्यतेव वचनानि पृष्ठतः ॥ ५९ ॥

मन्दरेति ॥ सतारका सनक्षत्रा निशा रात्रिर्मन्दरेण गिरिणान्तरिता मूर्तिर्यस्य तेन शशभृता चन्द्रेण प्रियसखीभिः समागता मिलिता त्वं पृष्ठतः स्थित्वा वचनानि श्रोष्यता श्रोतुमवस्थितेन मयेव लक्ष्यते । उपमालंकारः ॥ ५९ ॥

रुद्धनिर्गमनमा दिनक्षयात् पूर्वदृष्टतनु[4] चन्द्रिकास्मितम् ।
एतदुद्गिरति चन्द्रमण्डलं[6] दिग्रहस्यमिव रात्रिनोदितम्[5] ॥६०॥

रुद्धेति ॥ आ दिनक्षयाद्दिनक्षयं मर्यादीकृत्य रुद्धनिर्गमनं रुद्धोदयम् । अथ च, पूर्वस्यां दृष्टा तनुर्यस्य । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' (वा० १३७६) इति पूर्वाशब्दस्य पुंवद्भावः । एतच्चन्द्रमण्डलं कर्तृ । रात्र्या नोदितं कथयितुं प्रेरितं सत् । चन्द्रिकैव स्मितं यस्मिन्कर्मणि यथा तथा दिशः पूर्वस्या रहस्यमुद्गिरतीव वमतीव । यथा सेर्ष्या काचित् केनचिद्द्वारा सपत्नीरहस्यं कथयति तथा रात्रिरूपा स्त्री दिग्रूपायाः स्त्रियो रहस्यं तदवयवप्रदर्शनं प्रकटयति, त्वं पश्येत्यभिप्रायः । उत्प्रेक्षालंकारः ॥६०॥

पश्य पक्वफलिनीफलत्विषा बिम्बलाञ्छितवियत्सरोम्भसा ।
विप्रकृष्टविवरं[7] हिमांशुना चक्रवाकमिथुनं विडम्ब्यते ॥ ६१ ॥

पश्येति ॥ पक्वा या फलिनी तस्याः फलं तस्य त्विडिव त्विड् यस्य । तथा बिम्बेन लाञ्छितं योजितं वियत्सरोऽम्भश्च येन, उभयत्रापि दृश्यमानेनेत्यर्थः हिमांशुना चन्द्रेण कर्त्रा । चक्रवाकयोर्मिथुनं तीरस्थं विडम्ब्यते प्रतार्यते । यतो

---

**पाठा०**—१ उन्नयति. २ पश्य दिङ्मुखम्; दिङ्मुखं यथा. ३ आवृतम्. ४ तनुचन्द्रिका. ५ रात्रिचोदिता. ६ चन्द्रमण्डलम्. ७ विप्रकृष्टविधुरम्; विप्रकृष्टविरहम्; विप्रकृत्तविवरम्.

विप्रकृष्टं न जातं विवरमन्तरमुभयोस्तारतम्यं यस्य। त्वं पश्य सरःप्रतिबिम्बित-चन्द्रमण्डलं फलिनीफलभ्रान्त्या जिघृक्षुतापूर्वकमुद्दिश्य गच्छन्मिथुनं, वस्तुतस्तु तत्र फलिनीफललाभाभावान्नयस्तशस्त्रेण भूयत इति भावः। 'फलिन्यग्निशिखायां च फलिन्याम्' इति मेदिनी ॥ ६१ ॥

शक्यमोषधिपतेर्नवोदयाः कर्णपूररचनाकृते तव।
अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसंपुटैः कराः ॥ ६२ ॥

शक्यमिति ॥ हे प्रिये! नव उदयो येषाम्। तथाऽप्रगल्भा नूतना ये यवा-स्तेषां सूचयोऽङ्कुरास्तद्वत्कोमलाः। ओषधीनां पत्युश्चन्द्रस्य कराः किरणाः कर्णपूरस्य रचनाकृते रचनार्थं तवाग्राणि ये नखसंपुटास्तैः। तेषामतितैक्ष्ण्यादिति भावः। छेत्तुं द्विधाकर्तुं शक्यम्, शक्यैर्भूयत इत्यर्थः। शक्नोतेः 'ऋहलोः—' (पा. ३।१।१२४) इति भावे ण्यत्। यवाङ्कुरवत् कोमलांश्चन्द्रकरानुत्तार्य त्वया कर्णपूरं कर्तुमुत्साहः क्रियतामिति भावः ॥ ६२ ॥

अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ ६३ ॥

अङ्गुलीभिरिति ॥ शशी चन्द्रः। कुड्मलीकृते मीलिते सरोजे एव लोचने यस्य तत्तथोक्तं रजन्या मुखं वदनं अङ्गुलीभिरिव मरीचिभिः किरणैः केशसंचय-मिव तिमिरं तमः संनिगृह्य हठाद्गृहीत्वा चुम्बतीव। अन्योऽपि कश्चिच्चुम्बन् केशसंचयं संनिगृह्णाति। चुम्बनसमये केशसंनिग्रहे यः कोऽपि रसोद्बोधः स तद्वे-द्यैकवेद्य इत्यर्थः। समासोक्तिरलंकारः ॥ ६३ ॥

पश्य पार्वति! नवेन्दुरश्मिभिर्भिन्नसान्द्रतिमिरं नभस्तलम्।
लक्ष्यते द्विरदभोगदूषितं संप्रसादमिव मानसं सरः ॥ ६४ ॥

पश्येति ॥ हे पार्वति! नवस्येन्दो रश्मिभिर्भिन्नं सान्द्रं सघनं तिमिरं यस्य

---

पाठा०—१ शक्यः. २ नवोदयः. ३ नवाः. ४ कोमलः. ५ करः. ६ भग्नसान्द्र; सामिभिन्न; संविभिन्न. ७ संप्रसीदत्.

---

टिप्प०—1 वामनोऽप्याह (काव्या. सू. ५।२।२२) 'शक्यमिति रूपं कर्माभिधायां लिङ्गवचनस्यापि सामान्योपक्रमात्' इति। अत्रोदाहरणम्—'शक्यं श्वमांसेनापि क्षुत्प्रतिहन्तुं' इति भाष्यकारप्रयोगः। इति।

तन्नभस्तलं द्विरदभोगेन दूषितं मलिनं प्राक् पुनश्च कालान्तरेण सप्रसादं निर्मलं मानसं सर इव लक्ष्यते। त्वं पश्य, जलस्य नीलत्वादिति भावः ॥ ६४ ॥

रक्तभावमपहाय चन्द्रमा जात एष परिशुद्धमण्डलः।
विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया ॥६५॥

रक्तभावमिति ॥ हे प्रिये! एष चन्द्रमा रक्तभावं रक्तिमानमपहाय मुक्त्वा परिशुद्धं विशदं मण्डलं यस्य तथोक्तो जातः। तथा हि—निर्मलप्रकृतिषु वस्तुषु कालदोषेण जाता विक्रिया विकारः स्थिर उदय उत्पत्तिर्यस्यास्तादृशी न भवति खलु। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६५ ॥

उन्नतेषु शशिनः प्रभा स्थिता निम्नसंश्रयपरं निशातमः।
नूनमात्मसदृशी प्रकल्पिता वेधसा हि गुणदोषयोर्गतिः ॥६६॥

उन्नतेष्विति ॥ हे प्रिये! शशिनः प्रभा चन्द्रिकोन्नतेषु स्थलेषु स्थिता वर्तते। तथा निशातमः कर्तृ। निम्नेषु नीचेषु संश्रयो यस्य तत्तथोक्तं वर्तते। तथा हि—गुणदोषयोर्गतिर्वेधसा विधिना आत्मना नीचेनोच्चेन च सदृशी प्रकल्पिता रचिता हि नूनम्। नीचात्मा नीचस्थ एव भवति। उच्चात्मा उच्चस्थ एवेत्यर्थः ॥ ६६ ॥

चन्द्रपादजनितप्रवृत्तिभिश्चन्द्रकान्तजलबिन्दुभिर्गिरिः।
मेखलातरुषु निद्रितानमून्बोधयत्यसमये शिखण्डिनः ॥ ६७ ॥

चन्द्रेति ॥ गिरिर्मेखलासु नितम्बेषु ये तरवस्तेषु निद्रितान्सुप्तानमून् शिखण्डिनो मयूरान् चन्द्रस्य पादैर्जनिता प्रवृत्तिर्निर्गमनं येषां तैश्चन्द्रकान्तस्य ये जलबिन्दवस्तैः कृत्वाऽसमये बोधयति जागरयति। 'मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः' इति मेदिनी ॥ ६७ ॥

कल्पवृक्षशिखरेषु संप्रति प्रस्फुरद्भिरिव पश्य सुन्दरि!।
हारयष्टिरचनामिवांशुभिः कर्तुमागतकुतूहलः शशी ॥ ६८ ॥

कल्पेति ॥ हे सुन्दरि! संप्रति शशी चन्द्रः प्रस्फुरद्भिरंशुभिः कृत्वा हारयष्टि-

पाठा०—१ वेधसैव. २ इह; एव. ३ इमान्. ४ अविकल्पसुन्दरि; इव शंभुसुन्दरि. ५ गणनाम्. ६ उद्यत.

भालस्थल इति ॥ भालस्थले ललाटदेश एधमानं वर्धमानं यद्धाम तेजस्तेन निमित्तेनाधरीभूते परीभावमुपागते रवीन्दू एव नेत्रे यस्मात्, ताभ्यामधिकतेजस्कमित्यर्थः। यद्वा,–एधमानधाम अधरीभूतं चेति पदद्वयम्। तत्रैवं व्याख्येयम्—एधमानं वर्धमानं धाम तेजो यस्य वर्धिष्णुतेजस्कमित्यर्थः। तथोन्नतानतस्थानभेदेनाधरीभूते भालस्थनेत्रापेक्षया नीचैर्भूते रवीन्दू एव नेत्रे यस्य। तथा युगान्तकाले प्रलयकाल उचितं परिचितं हव्यवाहमग्निरूपम्। प्रलयकालिकानलरूपमित्यर्थः। अत एव मीनध्वजस्य कामस्य प्लोषणं दाहकम्। 'प्लुष दाहे', 'कृत्यल्युटो बहुलम्' (पा. ३।३।११३) इति कर्तरि ल्युट्। एवंभूतं लोचनमादधानम्, बिभ्राणमित्यर्थः॥ १२॥

**महार्हरत्नाञ्चितयोरुदारं[1] स्फुरत्प्रभामण्डलयोः समन्तात्।**
**कर्णस्थिताभ्यां शशिभास्कराभ्यामुपासितं कुण्डलयोश्छलेन॥१३॥**

महेति॥ पुनः किंभूतम्? महार्हाणि बहुमूल्यानि यानि रत्नानि मणयस्तैरञ्चितयोः खचितयोरत एव समन्तात्सर्वत उदारमधिकं यथा स्यात्तथा स्फुरत्प्रसरत्प्रभामण्डलं कान्तिवितानं ययोः। तथाभूतयोः कुण्डलयोः कर्णभूषणयोश्छलेन कैतवेन कर्णयोः श्रवणयोः स्थिताभ्यामुपविष्टाभ्यां शशिभास्कराभ्यां चन्द्रसूर्याभ्यामुपासितं सेवितम्। कुण्डलविषये कैतवात्सूर्याचन्द्रमसोरारोप्यमाणत्वाद्रूप्यरूपकं कैतवापह्नुतिश्चेत्युभयोः संसृष्टिः॥ १३॥

**स्वबद्धया[2] कण्ठिकयेव नीलमाणिक्यमय्या कुतुकेन गौर्याः[3]।**
**नीलस्य कण्ठस्य परिस्फुरन्त्या कान्त्या महत्या सुविराजमानम्[4] १४**

स्वबद्धयेति॥ पुनः किंभूतम्? परिस्फुरन्त्या परितः प्रसरन्त्या नीलस्य श्यामस्य कण्ठस्यात्मगलस्य महत्या कान्त्या प्रभया सुतरां विराजमानं शोभमानम्। कयेवेत्युत्प्रेक्षते—कुतुकेन कौतुकेन स्वस्मिन्नात्मीयकण्ठे बद्धया निहितया नीलमाणिक्यमय्या नीलरत्नविशेषप्रचुरया गौर्याः कण्ठिकयेव कण्ठभूषयेव। 'कण्ठिका कण्ठभूषणम्' इति मेदिनी॥ १४॥

---

पाठा०—१ उदार. २ सुबुद्धया. ३ गौर्या. ४ च विराजमानम्.

कालार्दितानां त्रिदशासुराणां चितारजोभिः परिपाण्डुराङ्गम्[1] ।
महन्महेभाजिनमुद्धता[2]भ्रप्रालेयशैलश्रियमुद्वहन्तम् ॥ १५ ॥

कालेति ॥ पुनः किंभूतम्? कालेनावसानकालिकमृत्युनार्दितानां पीडितानाम्, मृतानामिति यावत् । त्रिदशासुराणां देवदैत्यानां चिताया मृतमण्डपस्य रजोभिर्भस्मभिः परितः पाण्डुरं शुभ्रमङ्गं यस्य, विहितमृतमण्डपभस्मोद्धूलनमित्यर्थः । इह देवानाममरत्वाभावो दुर्घटः । तत्र ज्ञानाभावेन निहितपदस्य कवेः प्रमाद इत्याहुः । केचित्पुनः 'मनुजासुराणाम्' इति पाठान्तरं कल्पयन्ति । अथ यद्यपि कालार्दितानामिति विशेषणमुभयविशेष्यान्वयित्वेन द्वितीयविशेष्ये विवक्षितमप्यकालार्दितत्वविशेषणस्य व्यभिचारनियमने नियमनान्निषिद्धं भवति, तथापि प्रथमविशेष्ये लोकोपकारकतापक्षेऽपि व्यभिचारितार्थसंभवेन विशेषणानुपयोगात्संभवप्रयुक्तप्रधानभूतद्वितीयविशेष्यसंबन्धेन प्रथमविशेष्यान्वयित्वनिरासः । एवं चोपकार्यमनुजसहचरितत्वेन लोकोपकारकतापक्षावलम्बेन च विवक्षितार्थस्याविवक्षितत्वात् । संहारकतापक्षे तु प्रायो गतिरन्वेषणीयेत्यलम् । तथा महत्परिणाहि महेभस्य महतो गजस्याजिनं चर्म परिदधानमिति पूर्वेण संबन्धः । अत एवोद्धतमुदितमभ्रं मेघो यत्र स चासौ प्रालेयशैलो हिमवांस्तस्य श्रियं शोभामुद्वहन्तं दधानम् । निदर्शनालंकारः ॥ १५ ॥

पाणिस्थितब्रह्मकपालपात्रं वैकुण्ठ[3]भाजापि निषेव्यमाणम् ।
नरास्थिखण्डाभरणं[4] रणान्तमूलं त्रिशूलं कलयन्तमुच्चैः ॥ १६ ॥

पाणीति ॥ पुनः किंभूतम्? पाणौ स्थितं ब्रह्मकपालमेव पात्रं यस्य पाणिना ब्रह्मकरोटीपात्रं बिभ्राणमित्यर्थः । पुनः किंभूतम्? वैकुण्ठभाजापि हरिणापि निषेव्यमाणम् । सेवनमत्र कादाचित्कं नत्विदानींतनमेव त्रयाणामभेदस्यैवेष्टार्थकरत्वात् । एकैव मूर्तिरिति सप्तमसर्गोक्तेरिति भावः । हरापेक्षया हरेरपि लघुत्वसंभावनया संभवत्येव कदाचित्सेवनम् । तथा नराणामस्थिखण्डान्येवाभरणानि यस्य, हिंसाकालसंलग्नस्वशूलत्रितयास्थिकमित्यर्थः । तथा रणे योऽन्तो रिपूणा-

पाठा०—१ परिपाण्डुरागम्. २ उन्नत. ३ वैकुण्ठकङ्कालकरालकायम्. ४ सुरास्थिकण्ठाभरणम्; सुरास्थिखण्डाभरणम्.

मवसानं तस्य, मूलं कारणम् । 'मूलं कारणमूल्ययोः' इति मेदिनी । उच्चैर्महत्त्रि-शूलमायुधविशेषं कलयन्तं दधानम् ॥ १६ ॥

पुरातनीं ब्रह्मकपालमालां कण्ठे वहन्तं पुनराश्वसन्तीम् ।
उद्गीतवेदां[1] मुकुटेन्दुवर्षत्सुधाभरौघाप्लव[2]लब्धसंज्ञाम् ॥ १७ ॥

पुरातनीमिति ॥ पुनः किंभूतम्? मुकुटे य इन्दुश्चन्द्रस्तस्माद्वर्षन्गालन् यः सुधाभरौघोऽमृतसमूहप्रवाहस्तत्र य आप्लवः स्नानं तेन निमित्तेन लब्धसंज्ञां प्राप्तचेतनामत एवाश्वसन्तीमुज्जीवन्तीम् । अत एव पुनर्भूयोऽप्युद्गीतवेदां पठितश्रुतिकाम्, ब्रह्मत्वादिति भावः । पुरातनीं प्राक्तनीम् । 'सायंचिरम्–' (पा. ४।३।२३) इत्यादिना पुराव्ययाट्ट्युतुटौ । टित्वान्ङीप् । ब्रह्मकपालानां मालां स्रजं कण्ठे गले वहन्तम्, दधानमित्यर्थः ॥ १७ ॥

सलीलमङ्कस्थितया गिरीन्द्रपुत्र्या नवाष्टापदव[3]ल्लिभासा ।
विराजमानं शरदभ्रखण्डं परिस्फुरन्त्याचिररोचिषेव ॥ १८ ॥

सलीलमिति ॥ पुनः किंभूतम्? नवं यदष्टापदं हेम । 'हेमन्यष्टापदं वरे' इति मेदिनी । तस्य वल्ली लता । 'वल्ली तु व्रततिर्लता' इत्यमरः । प्रकृत्या तु वल्लीशब्दस्य ह्रस्वत्वमेव । 'कृदिकारादक्तिनः' (ग० ५०) इति दीर्घत्वम् । तस्या भा इव भा यस्याः, तद्वच्छोभमानयेत्यर्थः । तथा सलीलं सक्रीडमङ्कस्थितयाङ्क-मारूढया गिरीन्द्रपुत्र्या हिमालय॰न्यया परितः स्फुरन्त्या प्रसरन्त्या चिररोचिषा चलप्रभया विद्युता शरदभ्रस्य शरत्कालिकमेघस्य खण्डं शकलमिव विराजमानं शोभमानम् । महेश्वरस्य शुभ्रत्वं भस्मोद्धूलनादिति विवेचनीयम् । खण्डौपम्यं च शुभ्रत्वमात्रतात्पर्येण न विरुध्यते ॥ १८ ॥

दृप्तान्धकप्राणहरं पिनाकं म[4]हासुरस्त्रीविध[5]वत्वहेतुम् ।
करेण गृह्ण[6]न्तमगृह्यमन्यैः पुरा स्म[7]रप्लोषणकेलिकारम् ॥ १९ ॥

दृप्तेति ॥ दृप्तोऽभिमानी योऽन्धकोऽन्धकासुरस्तस्य प्राणानां हरमपहारकम्, तद्धननसाधनमित्यर्थः । तथा महासुरास्त्रिपुरादयस्तेषां याः स्त्रियस्तासां विधवत्वं

पाठा०—१ उद्गीर्णवेदाम्; उदीर्णवेदाम्. २ सुधौघसंप्लावन. ३ तुल्यभासा. ४ गजासुर. ५ विधवात्वहेतुम्. ६ असह्यशूलम्. ७ सुर.

वैधव्यम्, मृतभर्तृकत्वमिति यावत् । तस्य हेतुं कारणम्, महासुरविनाशकमित्यर्थः । तथा पुरा पूर्वं स्मरस्य कामस्य प्लोषणं दाहं केल्यानायासेन करोतीति तथा । अन्यैः शिवातिरिक्तैरगृह्यं ग्रहीतुमशक्यं पिनाकं धनुः करेण पाणिना गृह्णन्तं दधानम् ॥ १९ ॥

भद्रासनं काञ्चनपादपीठं महार्हमाणिक्यविभङ्गिचित्रम् ।
अधिष्ठितं चन्द्रमरीचिगौरैरुद्वीज्यमानं चमरैर्गणाभ्याम् ॥ २० ॥

भद्रासनमिति ॥ महार्हाणां बहुमूल्यानां माणिक्यानां विभङ्गिभी रचनाभिश्चित्रं विचित्रम् । भद्रं शुभमासनं पट्टादिनिर्मितं यत्र तादृशम् । बध्नन्तमिति पदमध्याहार्यं भद्रासनमासनविशेषमिति केचिद्व्याचक्षते, तत्त्वध्याहारदोषाद्योगाभ्याससमयाभावेन तदसंभवाच्चोपेक्षणीयमिति । काञ्चनपादपीठं सौवर्णसिंहासनमधिष्ठितम्, तत्रोपविष्टमित्यर्थः । 'अधिशीङ्स्थासाम्–' (पा. १।४।४६) इति कर्मत्वम् । पुनश्च । चन्द्रमरीचिवद्गौरैर्विशदैश्चमरैः कृत्वा गणाभ्यां कर्तृभ्यामुद्वीज्यमानं प्रेङ्ख्यमानम् । कर्तृद्वित्वे चमरबहुत्वं प्रतिक्षणनूतनग्रहणात्संगमनीयम् २०

शस्त्रास्त्रविद्याभ्यसनैकसक्ते सविस्मयैरेत्य गणैः सुदृष्टे ।
नीराज्यमाने स्फटिकाचलेन सानन्दनिर्दिष्टदृशं कुमारे ॥ २१ ॥

शस्त्रास्त्रेति ॥ शस्त्राणि धनुरादीनि, अस्त्राणि मोहनादीनि, तान्येव विद्यास्तासामभ्यसन एवैकं केवलं सक्तेऽनुरक्ते । तथा गणैः प्रमथप्रभृतिभिरेत्य तत्समीपं प्राप्य सविस्मयैः साश्चर्यैः सद्भिः सुतरां दृष्टे, साभिलाषमवलोकित इत्यर्थः । तथा स्फटिकाचलेन कैलासेन, जङ्गमात्मकेन सतेति शेषः । नीराज्यमाने, आर्तिक्येनेति शेषः । एवंभूते कुमारे पुत्रे सानन्दं सामोदं निर्दिष्टा सन्निहिता दृग्दृष्टिर्येन तम्, सानन्दतया कुमारमवलोकयन्तमित्यर्थः ॥ २१ ॥

तथाविधं शैलसुताधिनाथं पुलोमपुत्रीदयितो निरीक्ष्य ।
आसीत्क्षणं क्षोभपरो नु कस्य मनो न हि क्षुभ्यति धामधाम्नि ॥२२॥

तथाविधमिति ॥ पुलोमपुत्री पुलोमजा, शचीति यावत् । 'पुलोमजा शची-

---

पाठा०—१ महार्घ्यम्. २ अवसक्ते; एकसक्तैः. ३ सुदृष्टम्. ४ संवीज्यमाने. ५ अम्बिकयाञ्चलेन. ६ अथ कस्य; अत्र कस्य; अन्तकस्य.

न्द्राणी' इत्यमरः । तस्या दयितः प्रियः पुरंदरः । तथाविधं पूर्वोक्तविशेषणविशिष्टं शैलसुतायाः पार्वत्या अधिनाथं महेश्वरं निरीक्ष्य क्षणं मुहूर्तं क्षोभे चित्तसंचलने पर आसक्तः संचलनेन व्याकुल आसीत् । ननु महेश्वरदर्शनेन कथं व्याकुल आसीदित्यर्थान्तरं न्यस्यति — हि यतः धामधाम्नि तेजोराशौ कस्य मनश्चेतो न क्षुभ्यति क्षोभं प्राप्नोति ? अपि तु सर्वस्यापीत्यर्थः ॥ २२ ॥

**विकस्वराम्भोजवनश्रिया तं दृशां सहस्रेण निरीक्षमाणः[1] ।**
**रोमालिभिः[2] स्वर्गपतिर्बभासे पुष्पोत्कराकीर्ण इवाम्रशाखी[3] ॥ २३ ॥**

विकस्वरेति ॥ स्वर्गपतिर्महेन्द्रः । विकस्वराणां प्रफुल्लानामम्भोजानां कमलानां वनस्य श्रीरिव श्रीः शोभा यस्य तथाभूतेन दृशां नेत्राणां सहस्रेण तं महेश्वरं निरीक्षमाणो विलोकमानः सन् । रोम्णामालिभिः समूहैर्निमित्तैः पुष्पाणामुत्करेण समूहेनाकीर्ण आसमन्ताद्व्याप्त आम्रशाख्याम्रवृक्ष इव बभासे शुशुभे । उपमालंकारः ॥ २३ ॥

**दृष्ट्वा सहस्रेण दृशां महेशमभूत्कृतार्थोऽतितरां महेन्द्रः ।**
**सर्वाङ्गजातं तदथो विरूपमिव प्रियाकोपकरं विवेद ॥ २४ ॥**

दृष्ट्वेति ॥ दृशां सहस्रेण महेशं शिवं दृष्ट्वा महेन्द्र इन्द्रोऽतितरामतिशयं कृतार्थः कृतकृत्योऽभूत् । अथोऽनन्तरं तत्सर्वाङ्गजातं सर्वेष्वङ्गेषु भूतं विरूपं रोमाञ्चजनितवैरूप्यं प्रियायाः शच्याः कोपकरं क्रोधविधायीव विवेद जज्ञे । सपत्नीसंबन्धजनितत्वशङ्काकुलत्वादिति भावः ॥ २४ ॥

**ततः कुमारं कनकाद्रिसारं पुरंदरः प्रेक्ष्य धृतास्त्रशस्त्रम् ।**
**महेश्वरोपान्तिकवर्तमानं शत्रोर्जयाशां मनसा बबन्ध ॥ २५ ॥**

तत इति ॥ ततोऽनन्तरम् । पुरंदर इन्द्रः कनकाद्रेः सुमेरोः सार इव सारो वीर्यं यस्य तम्, महाबलीयांसमित्यर्थः । अत एव धृतान्यस्त्राणि शस्त्राणि च येन । तथा महेश्वरस्य पितुरुपान्तिके समीपे वर्तमानं तिष्ठन्तं कुमारं प्रेक्ष्य विलोक्य

---

पाठा०—१ निरीक्ष्यमाणः. २ सर्वाङ्गनेत्रो द्युपतिः; सर्वाङ्गजेन द्युपतिः. ३ अम्रशाखी. ४ खलु तेन शक्रः. ५ सर्वाङ्गजातं विकलम्; सर्वाङ्गजानेत्रदलम्. ६ विपूरम्. ७ पुरा. ८ प्रियालोकपरम्; प्रियाकोपपरः.

शत्रोस्तारकस्य जय आशां मनसा बबन्ध धृतवान् । एवंभूतोऽयं कुमारो मच्छत्रूञ्जेष्यत्येवेति पुरंदरस्य प्रतीतिरभूदित्यर्थः ॥ २५ ॥

अथ युग्मेनाह—

श्रीनीलकण्ठ! द्युपतिः पुरोऽस्ति [1]त्वयि प्रणामावसरं [2]प्रतीच्छन् ।
[3]सहस्रनेत्रेऽत्र भव त्रिनेत्र! [4]दृष्ट्या प्रसादप्र[5]गुणो [6]महेश! ॥ २६ ॥
इति प्रबद्धाञ्जलिरेत्य नन्दी निधाय कक्षामभि हेम[7]वेत्रम् ।
प्रसादपात्रं पुरतो [8]भविष्णुरथ स्मरारातिमुवाच वाचम् ॥ २७ ॥

श्रीति । इतीति ॥ अथ नन्दी गणः पुरतः सर्वेभ्योऽग्रगामितयेन्द्राधिष्ठितकक्षामारभ्य महेश्वराधिश्रितमन्दिरपर्यन्तमहम्पूर्विकया बहुविधगणसुरगणावृते मध्यगतदेशेऽहम्पूर्विकावलम्बेनेति तात्पर्यार्थः । प्रसादस्येन्द्रागमनिवेदनामुदन्धेनान्धकारिणा दत्तपारितोषिकरूपस्य पात्रं योग्यो भविष्णुर्भवितुमिच्छुः सन्नेत्य, अन्तरिति शेषः । तथा कक्षां द्वारमभि संमुखं हेमवेत्रं सौवर्णयष्टिकां निधाय संस्थाप्य । इयं वेत्रधारिणो रीतिर्वर्णिता । प्रबद्धाञ्जलिः सन्स्मराराातिं महेश्वरम् । भोः श्रीयुक्तनीलकण्ठ सपार्वतीक महेश्वर! द्युपतिरिन्द्रस्त्वयि भवति प्रणामावसरं प्रणतिसमयं प्रतीच्छन्प्रतीक्षमाणः पुरोऽग्रेऽस्ति विद्यते । महेश्वरप्रणिनंसुः सन्बहिरास्त इत्यर्थः । अतो हे त्रिनेत्र भो महेश! अत्र पुरोवर्तिनि सहस्रनेत्र इन्द्रे दृष्ट्या दर्शनेन प्रसादप्रगुणः प्रसादविधानानुकूलो भव, आत्मीयदर्शनरूपं प्रसादं तदुपरि कुर्वित्यर्थः । इत्येवंभूतां वाचमुवाचोक्तवान् ॥ २६–२७ ॥

[9]पुरा [10]सुरेन्द्रं सुरसङ्घसेव्यं [11]त्रिलोकसेव्यस्त्रिपुरासुरारिः ।
प्रीत्या [12]सुधासारनिधारिणेव ततोऽनुजग्राह विलोकनेन ॥ २८ ॥

पुरेति ॥ ततोऽनन्तरं निवेदनानन्तरं त्रिलोकसेव्यस्त्रैलोक्यपूजनीयस्त्रिपुरासुरस्यारिः शत्रुर्महेश्वरः सुरसङ्घेन देवसमूहेन सेव्यं पूज्यं सुरेन्द्रमिन्द्रं पुरा प्रथमं

---

पाठा०—१ तव. २ च पृच्छन्. ३ सहस्रनेत्रोऽत्र भव त्रिनेत्र; सहस्रनेत्रं प्रसर त्रिनेत्र. ४ दृष्ट्वा. ५ प्रवणः. ६ महेशः. ७ हेमदण्डम्. ८ भविष्णुमध्यन्धकारातिम्, भविष्णुरधिस्मराराातिम्. ९ मुदा. १० असुरारिम्. ११ त्रैलोक्यसेव्यः, त्रैलोकसेव्यः. १२ सुधासारविसारिणा; सुधासारविधारिणा.

प्रीत्या निमित्तेन सुधासारम्, अमृततुल्यमित्यर्थः । निधारयति नितरां धारां धारारूपं करोति । 'तत्करोति–' ( ग० २०४ ) इति करोत्यर्थे णिच् । सुधासार-धारां वर्षतेत्यर्थः । एवंभूतेनेव विलोकनेन दर्शनेनानुजग्राह, तदुपर्यनुग्रहमकार्षी-दित्यर्थः । स्वामिनां प्रसादपूर्वकमवलोकनमेव भृत्यानामुपरि महाननुग्रह इति भावः ॥ २८ ॥

**किरीटकोटिच्युतपारिजातपुष्पोत्करेणानमितेन मूर्ध्ना ।**
**स्वर्गैकवन्द्यो जगदेकवन्द्यं तं देवदेवं प्रणनाम देवः ॥ २९ ॥**

**किरीटेति** ॥ स्वर्ग एवैकं केवलं वन्द्यो नमस्करणीयो देव इन्द्रः । आनमिते-नात एव किरीटकोट्याश्च्युतोऽधःपतितः पारिजातपुष्पाणां मन्दारकुसुमानामुत्करः समूहो यस्मात्तथाभूतेन मूर्ध्ना शिरसा जगतामेकमेव वन्द्यं नमस्करणीयम्, एत-त्सदृशो जगतां वन्द्यतयाऽन्यो न विद्यत इत्यर्थः । तं देवदेवं महेश्वरं प्रणनाम नमश्चक्रे ॥ २९ ॥

**अनेकलोकैकनमस्क्रियार्हं महेश्वरं तं त्रिदशेश्वरः सः ।**
**भक्त्या नमस्कृत्य कृतार्थतायाः पात्रं पवित्रं परमं बभूव ॥ ३० ॥**

**अनेकेति** ॥ स त्रिदशेश्वर इन्द्रो भक्त्या, भक्तिपूर्वकमित्यर्थः । अनेके त्रयो ये लोकास्तेषामेक एव नमस्क्रियायामर्हं उचितस्तथोक्तं तं महेश्वरं नमस्कृत्य । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इत्युक्तेर्द्वितीया । परममत्यन्तं पवित्रं विशदं कृतार्थतायाः कृतकृत्यत्वस्य पात्रं स्थानं बभूव, महेन्द्रो महेश्वरं प्रणम्य कृतकृत्योऽभूदित्यर्थः ॥ ३० ॥

**सुभक्तिभाजामधि पादपीठं प्रान्तक्षितिं नम्रतरैः शिरोभिः ।**
**ततः प्रणेमुः पुरतो गणानां गणाः सुराणां क्रमतः पुरारिम् ३१**

**सुभक्तीति** ॥ ततोऽनन्तरम् । सुभक्तिं भजन्ति तेषाम् । 'भजो ण्विः' ( पा. ३।२।६२ ) इति ण्विः । सुराणामिन्द्रातिरिक्तानां सुराणां गणाः । गणानां

---

**पाठा०**—१ पुष्पेण भक्त्या. २ स्वर्गैकवन्द्यः. ३ जगदेकदेवं ननाम देवः स सहस्रनेत्रः. ४ त्रिदिवेश्वरः. ५ पादपीठं प्रीताक्षिभिः; पादपीठं प्रान्तीकृतैः. ६ सुराणाम्. ७ सशक्राः स्मरारिम्; सुरेन्द्रक्रमतः पुरारिम्.

प्रमथप्रभृतीनां पुरतोऽग्रे । अनेन मर्यादातिरिक्तकरणस्य दुर्विधेयत्वमुक्तम् । पादपीठस्य चरणाधारपीठविशेषस्य प्रान्तक्षितिः समीपभूमिस्तामध्यधिकृत्य, आधारभूतां कृत्वेत्यर्थः । अत्र 'अधि'शब्देनाधिकरणमाधारः । स चौपश्लेषिकः । अव्ययानामाकृतिगणत्वादधिशब्दोऽत्राधिकरणपर्यायोऽव्ययम् । अन्यथासन्तत्वमन्वेषणीयम् । नम्रतरैः शिरोभिः पुरारिं महेश्वरं क्रमतः क्रमेण प्रणेमुर्नमश्चक्रुः ॥ ३१ ॥

**गणोपनीते प्रभुणोपदिष्टः शुभासने हेममये पुरस्तात् ।**
**प्रापोपविश्य प्रमुदं सुरेन्द्रः प्रभुप्रसादो हि मुदे न कस्य ॥ ३२ ॥**

गणेति ॥ सुरेन्द्रो गणेन केनचिदुपनीते, प्रभुशासनेनेति शेषः । तथा हेममये सुवर्णमये शुभासने प्रभुणा हरेणोपदिष्ट आरोढुमाज्ञप्तः सन् । पुरस्तात्प्रभोरग्रत एवोपविश्य स्थित्वा प्रकृष्टां मुदं हर्षं प्राप । तथा हि—प्रभुप्रसादः प्रभुकर्तृकोऽनुग्रहः कस्यानुगस्य मुदे प्रीत्यै न भवति ? अपि तु सर्वस्यापीति काक्का व्याख्येयम् ॥ ३२ ॥

**क्रमेण चान्येऽपि विलोकनेन संभाविताः सस्मितमीश्वरेण ।**
**उपाविशंस्तोषविशेषमाप्ता दृग्गोचरे तस्य सुराः समग्राः ॥ ३३ ॥**

क्रमेणेति ॥ ईश्वरेण महेश्वरेण क्रमेणानुक्रमतोऽन्येऽपि च समग्राः सुराः सस्मितं सप्रसादव्यञ्जकहासं यथा तथा विलोकनेन संभाविता आदृता अत एव तोषविशेषं संतोषाधिक्यमाप्ताः प्राप्ताः सन्तस्तस्य प्रभोर्दृग्गोचरे दृष्टिविषय उपाविशंस्तस्थुः, यथा युगपदेव भगवान्सर्वानवलोकयेत्तथैव सर्वे तस्थुरित्यर्थः ॥ ३३ ॥

**अथाह देवो बलवैरिमुख्यान् गीर्वाणवर्गान्करुणार्द्रचेताः ।**
**कृताञ्जलीकानसुराभिभूतान् ध्वस्तश्रियः श्रान्तमुखानवेक्ष्य ॥ ३४ ॥**

अथेति ॥ अथ देवो हरो बलवैरीन्द्रः स मुख्यो येषु तथाभूतान्गीर्वाणवर्गान्देवसमूहान् । असुरेण तारकेणाभिभूताञ्जितानत एव ध्वस्तश्रियो नष्टलक्ष्मीकानत एव श्रान्तं खिन्नं मुखं येषाम्, नष्टमुखतेजसः इत्यर्थः । अत एव कष्ट-

---

पाठा०—१ उपदिष्टे. २ नृपासने; ध्रुवासने. ३ प्रमदम्. ४ प्रभोः प्रसादः. ५ अन्येन. ६ उपाविशुः. ७ पुरः समेताः. ८ गीर्वाणमुख्यान्. ९ असुरावधूतान्. १० ध्वस्तप्रियान्. ११ शीर्णमुखान्.

निवृत्त्यर्थं कृतोऽञ्जलिर्यैस्तानवेक्ष्य दृष्ट्वा करुणयार्द्रं स्निग्धं चेतो यस्य तथाभूतः सन्नाहोवाच ॥ ३४ ॥

**अहो वतानन्तपराक्रमाणां दिवौकसो! वीरवरायुधानाम् ।**
**हिमोदबिन्दुग्लपितस्य किं वः पद्मस्य दैन्यं दधते मुखानि ॥३५॥**

अहो इति ॥ 'अहो'शब्दोऽत्र हेशब्दपर्यायः । हे दिवौकसो देवाः! अनन्तपराक्रमाणामपारविक्रमाणाम् । तथा वीरान्वृणतेऽभिलषन्ति, वीरहस्तजिगमिषाशालीनीत्यर्थः । एवंभूतान्यायुधानि येषां तथाभूतानां वो युष्माकं मुखानि हिमस्य यदुदमुदकं तस्य यो बिन्दुस्तेन ग्लपितस्य क्षीणहर्षीकृतस्य । 'उदकस्योदः संज्ञायाम्' ( पा. ६।३।५७ ) इत्युदादेशः । तथाभूतस्य पद्मस्य दैन्यं दीनतां किं कुतो दधते बिभ्रति? यूयं कुतः कारणतो भ्रष्टलक्ष्मीका इति प्रश्नाशयः ॥ ३५ ॥

**स्वर्गौकसः! स्वर्गपरिच्युताः किं स्वपुण्यराशौ सुमहत्तमेऽपि ।**
**चिह्नं चिरोढं न तु यूयमेते निजाधिपत्यस्य परित्यजध्वम् ॥३६॥**

स्वर्गौकस इति ॥ हे स्वर्गौकसः! स्वपुण्यराशौ स्वर्गप्राप्तिनिमित्तपुण्यव्रजे सुतरां महत्तमेऽपि, अक्षयेऽपीत्यर्थः । किं कुतः, स्वर्गपरिच्युताः स्वस्थानभ्रष्टाः? भ्रंशे किं कारणमिति प्रश्नाशयः । अथ चाश्वासयति—एते यूयं चिरोढं बहुकालमूढं निजाधिपत्यस्य स्वीयस्वामितायाश्चिह्नं छत्रचामरादि तु न परित्यजध्वं मा परित्यजत । विध्यर्थे लोट् । त्यजध्वमित्यात्मनेपदं चिन्त्यम् ॥ ३६ ॥

**दिवौकसो! देवगृहं विहाय मनुष्यसाधारणतामवाप्ताः ।**
**यूयं कुतः कारणतश्चरध्वं महीतले मानभृतो महान्तः ॥ ३७ ॥**

दिवौकस इति ॥ हे दिवौकसः! महान्तोऽत एव मानभृतो मनस्विनो यूयं कुतः कारणतः कारणाद्देवगृहं स्वर्गं विहाय परित्यज्य मनुष्यसाधारणतां मानवसाम्यमवाप्ताः सन्तो महीतले चरध्वम्? संप्रश्ने लोट् । अत्राप्यात्मनेपदं चिन्त्यम् ॥ ३७ ॥

---

**पाठा०**—१ दिवौकसाम्. २ सुपुण्यराशौ. ३ सुमहत्तरे. ४ बत; ननु. ५ स्वर्गौकसः. ६ चरध्वे. ७ महीभृतः. ८ मानधनाः.

अनन्यसाधारणसिद्धमुच्चैस्[1]तद्दैवतं धाम निका[2]मरम्यम् ।
कस्माद[3]कस्मान्निरगाद्भवद्भ्यश्चिरार्जितं पुण्यमिवा[5]पचारात् ॥ ३८ ॥

अनन्येति ॥ हे देवाः ! अन्यसाधारणेनान्यदीयदेशतुल्यत्वेन सिद्धं साधितम् , रचितमित्यर्थः । तत्र भवतीति तथोक्तमत एव निकामं बहु रम्यं मनोहरमुच्चैर्महत्तत्प्रसिद्धं दैवतं धाम स्वर्गमकस्मात्सहसैव कस्माद्धेतोः भवद्भ्योऽपचारात्पापाद्धेतोश्चिरार्जितं बहुकालेन संपादितं पुण्यमिव निरगान्निर्गतम् ? 'तुम्हांपासून स्थल कसें जातें जहालें ?' इति लोकोक्तिरीतिरत्रानुसंधेया ॥ ३८ ॥

दिवौ[6]कसो ! वो हृदयस्य कस्मात्तथाविधं धैर्यमहार्यमार्याः ! ।
अगादगाधस्य जलाशयस्य ग्रीष्मा[7]तितापादिवशादिवाम्भः ॥३९॥

दिवौकस इति ॥ हे दिवौकसो हे आर्याः ! तथाविधं तादृशमहार्यमनिर्वचनीयं वो युष्माकं हृदयस्य मनसो धैर्यं कस्माद्धेतोर्ग्रीष्मेण योऽतितापादिः संतापादिस्तस्य वशाद्धेतोः । अगाधस्य जलाशयस्याम्भ इव । अगादनशत्, अन्यत्र शुष्यतीत्यर्थः । धैर्यं न हेयमिति भावः ॥ ३९ ॥

संप्रति स्वयमेव भयनिमित्तं दर्शयति —

सुराः ! सु[8]राधीशपुरःसराणां स[9]मीयुषां वः सममातुराणाम् ।
तद्ब्रू[10]त लोकत्रयजित्वरात्किं म[11]हासुरात्तारकतो विरुद्धम् ॥ ४० ॥

सुरा इति ॥ हे सुराः ! तत्तस्मादातुराणामत एव समं सह समीयुषामागतानां यथा सुराधीशपुरःसराणामिन्द्रप्रमुखानां वो युष्माकं लोकत्रयजित्वरात्त्रैलोक्यजेतुस्तारकतस्तारकसंज्ञकान्महासुराद्विरुद्धं वैरं किम् ? स भवतां वैरी किमिति प्रश्नः । ब्रूत वदत ॥ ४० ॥

---

**पाठा०**—१ सुदैवतम्; तदैव तम्. २ निकामकामम्; निकामकाम्यम्. ३ यमाद्यैः. ४ अगाधम्. ५ अपवादात्. ६ विरुद्धतः. ७ ग्रीष्मातपापत्तिवशात्. ८ पुरारातिपुरो विवर्णम्; पुरारातिपुरः सुवर्णम्; सुनासीरपुरःसराणाम्. ९ समीयिवांसं सममातुराणाम्; समीहितं यत्सममातुराणाम्; समीयुषां सामसमातुराणाम्. १० ब्रूत लोकत्रयजित्वराः, भूतलोकत्रयजित्वराः. ११ महासुरप्रायकृतः.

**पराभवं तस्य महासुरस्य निषेद्धुमेकोऽहमलम्भविष्णुः ।**
**दावानलप्लोषविपत्तिमन्यो महाम्बुदात्किं हरते वनानाम् ॥ ४१ ॥**

पराभवमिति ॥ भो देवाः ! तस्य महासुरस्य तारकस्य तत्कर्तृकम् । 'कर्तृकर्मणोः–' ( पा. २।३।६५ ) इति कर्तरि षष्ठी । पराभवं पराजयम्, अर्थाद्यौष्माकीणमित्यर्थः । निषेद्धुं निवारयितुमहमेक एवालम्भविष्णुः, समर्थोऽस्मीत्यर्थः । तथा हि—वनानां संबन्धिनीं दावानलस्य दावानलकर्तृको यः प्लोषो दाहः स एव विपत्तिस्तां महाम्बुदान्महतो मेघादन्योऽपरः । 'अन्यारात्–' ( पा. २।३।२९ ) इत्यादिना पञ्चमी । हरते किम्? अपि तु नैवेति काक्का व्याख्येयम् ॥ ४१ ॥

**इतीरिते मन्मथमर्दनेन सुराः सुरेन्द्रप्रमुखा मुखेषु ।**
**सान्द्रप्रमोदाश्रुतरङ्गितेषु दधुः श्रियं सत्वरमाश्वसन्तः ॥ ४२ ॥**

इतीति ॥ मन्मथमर्दनेन महेश्वरेण इतीत्थमीरित उक्ते सति सुरेन्द्रप्रमुखाः सुरा देवा आश्वसन्तो विश्वसन्तः सन्तः, उज्जीवन्त इति यावत् । सान्द्राणि सघनानि यानि प्रमोदाश्रूण्यानन्दबाष्पाणि तैस्तरङ्गितेषु तरङ्गयुक्तेषु मुखेषु सत्वरं शीघ्रम् । महेश्वरवाक्यस्यात्यानन्दहेतुत्वाच्छैघ्र्यम् । श्रियं शोभां दधुर्बभ्रुः ॥ ४२ ॥

**ततो गिरीशस्य गिरां विरामे जगाद लब्धेऽवसरे सुरेन्द्रः ।**
**भवन्ति वाचोऽवसरे प्रयुक्ता ध्रुवं फलाविष्टमहोदयाय ॥ ४३ ॥**

तत इति ॥ ततोऽनन्तरं गिरीशस्य हरस्य गिरां वाचां विरामे सति लब्धे प्राप्तेऽवसरे समये सुरेन्द्र इन्द्रो जगादोवाच । तथा हि—अवसरे काले प्रयुक्ताः प्रेरिताः, उक्ता इति यावत् । वाचो गिरः फलेनाविष्टः पूर्णो यो महोदयो महर्द्धिस्तस्मै तदर्थं भवन्ति ध्रुवम् । क्रियाग्रहणात्संप्रदानत्वम् । तादर्थ्ये वा चतुर्थी ॥ ४३ ॥

**ज्ञानप्रदीपेन तमोपहेनाविनश्वरेणास्खलितप्रभेण ।**
**भूतं भवद्भावि च यच्च किंचित्सर्वज्ञ ! सर्वं तव गोचरं तत् ॥ ४४ ॥**

पाठा०—१ निषेद्धुकामः. २ अरण्यस्य हर्तुं जलदात्प्रभुः किम्. ३ सान्द्रप्रमोदाः सुचिरस्मितेषु. ४ विताने. ५ लब्धावसरे. ६ सुरेशः. ७ प्रविस्पष्टफलोदयाय; प्रभाविष्टफलोदयाय. ८ सर्वत्र. ९ गोचरः.

ज्ञानेति ॥ हे सर्वज्ञ ! तमोपहेनाज्ञानहन्त्राऽविनश्वरेणाक्षयेणास्खलितप्रभेणास्खलितकान्तिना । अनेन विशेषणेनामन्दकान्तित्वं हि बोद्धव्यम् । अतो न पौनरुक्त्यम् । तथाभूतेन ज्ञानप्रदीपेनात्मज्ञानरूपदीपकेन भूतं व्यतीतं भवद्वर्तमानं भावि भविष्यच्च यत्किंचित्तत्सर्वमेव तव गोचरं ज्ञानविषयम्, अस्तीति शेषः । आत्मज्ञानेन त्रैकालिकस्यापि कर्मादिकस्य ज्ञातासीति भावः ॥ ४४ ॥

दुर्वारदोरुद्यमदुःसहेन यत्तारकेणामरघस्मरेण ।
तदीशितामाप्नवता निरस्ता वयं दिवोऽमी वद किं न वेत्सि ॥ ४५ ॥

दुर्वारेति ॥ हे भगवन् ! दुर्वारो दुर्धर्षणीयो यो दोरुद्यमो भुजदण्डबलं तेन कारणेन दुःसहेनात एवामराणां देवानां घस्मरेण वधकेन । 'घस्मरो वधकेऽपि च' इति मेदिनी । 'सृघस्यदः क्मरच्' ( पा. ३।२।१६० ) क्मरच्प्रत्ययः । ईशितां स्वर्गाधीशतामाप्नवता तारकेणामी वयं दिवः स्वर्गसकाशाद्यन्निरस्ता निष्कासितास्तन्न वेत्सि किम् ? अपि तु वेत्स्येव । वद । वाक्यार्थः कर्म ॥ ४५ ॥

विधेरमोघं स वरप्रसादमासाद्य सद्यस्त्रिजगज्जिगीषुः ।
सुरानशेषानहकप्रमुख्यान्दोर्दण्डचण्डो मनुते तृणाय ॥ ४६ ॥

विधेरिति ॥ हे भगवन् ! स तारको विधेर्ब्रह्मणः सकाशादमोघं सफलं वरप्रसादमभिलाषानुग्रहम् । 'वरोऽभिलषिते वरे' इति मेदिनी । आसाद्य प्राप्य सद्यः सहसैव दोर्दण्डाभ्यां भुजदण्डाभ्यां चण्डः प्रचण्डः, दुर्जय इति यावत् । अत एव त्रिजगतो जिगीषुर्जेता सन् । अहकप्रमुख्यानहं प्रमुखो ज्येष्ठो येषु तथाभूतानशेषान्सर्वान्सुरान् । तृणाय तृणं मनुते मन्यते । 'मन्यकर्मण्यनादरे विभाषाप्राणिषु' ( पा. २।३।१७ ) इति चतुर्थी सविकरणग्रहणात्तनोतियोगे चिन्त्या ॥ ४६ ॥

स्तुत्या पुरास्माभिरुपासितेन पितामहेनेति निरूपितं नः ।
सेनापतिः संयति दत्यमेतं पुरः स्मरारातिसुतो निहन्ति ॥ ४७ ॥

---

पाठा०—१ दोर्दुर्मद. २ तदीश नन्वात्मपदान्निरस्ताः, तदीश वामाप्लवता निरस्ताः. ३ बत. ४ सुवर. ५ अस्मत्प्रमुख्यानमरानशेषान्; सुरान्स जम्भारिमुखान्प्रचण्डं; सुरान्स जम्भारिमुरारिमुख्यान्. ६ एनम्. ७ पुरा स्मरारातिसुतः; पुरा स्मरारेस्तनयः.

स्तुत्येति ॥ हे भगवन् ! पुरा पूर्वमस्माभिः स्तुत्या श्लाघयोपासितेनानुकूलितेन पितामहेन ब्रह्मणा नोऽस्मान् हे देवाः ! संयति संगरे स्मरारातिसुतः शांकरिः सेनापतिः सेनानीः सन्नेतं दैत्यं पुरोऽग्रे निहन्ति, निहनिष्यतीत्यर्थः । 'यावत्पुरानिपातयोर्लट्' ( पा. ३।३।४ ) इति निरूपितं कथितम् ॥ ४७ ॥

अहो[1] ! ततोऽनन्तरमद्ययावत्सुदुःसहां[2] तस्य पराभवार्तिम् ।
विषेहिरे हन्त[3] हृदन्तशल्यमाज्ञानिवेशं[4] त्रिदिवौकसोऽमी ॥ ४८ ॥

अहो इति ॥ अहो भगवन् ! ततः पितामहनिरूपणादनन्तरमद्ययावदद्यपर्यन्तममी त्रिदिवौकसो देवाः सुदुःसहाम् । 'ईषद्दुःसुषु–' ( पा. ३।३।१२६ ) इति खल् । तस्य तत्कर्तृकां पराभवेन निमित्तेनार्तिं पीडां हृदन्ते मनोमध्ये शल्यं तद्वद्दुःसहमाज्ञाया अनुशासनस्य 'भारं वहते' इत्यादिकस्य निवेशं स्थापनं विषेहिरेऽसहन्त । हन्तेति दुःखे ॥ ४८ ॥

निदाघधामक्लमविक्लवानां नवीनमम्भोदमिवौषधीनाम् ।
सुनन्दनं[5] नन्दनमात्मनो नः सेनान्यमेतं[6] स्वयमादिश त्वम् ४९

निदाघेति ॥ हे भगवन् ! त्वं स्वयमेव निदाघे ग्रीष्मे यद्धाम सौरं तेजस्तेन यः क्लमः खेदो दाहलक्षणस्तेन विक्लवानां मलिनानामौषधीनां सुतरां नन्दनमानन्दकारिणं नवीनमाषाढीयमम्भोदमिव नोऽस्माकं नन्दनमानन्दकारिणं तथा सेनान्यं सेनाधिपतिमेतं पुरोवर्तिनमात्मनो नन्दनं पुत्रम् । नन्द्यादित्वाल्ल्युः । 'युवोः–' ( पा. ७।१।१ ) इत्यनादेशः । आदिशानुशाधि । प्रार्थनायां लोट् । अस्मत्कार्यं कर्तुमिति शेषः ॥ ४९ ॥

त्रैलोक्यलक्ष्मीहृदयैकशल्यं[7] समूलमुत्खाय महासुरं तम् ।
अस्माकमेषां पुरतो भवन्सन्[8] दुःखापहारं युधि[9] यो विधत्ते ॥ ५० ॥

त्रैलोक्येति ॥ यो भवन्नन्दनस्त्रैलोक्यस्य लक्ष्म्या हृदय एकमद्वितीयं शल्यं तद्वद्दुर्धर्षं तं महासुरं तारकं युधि संगर एषामस्माकं पुरतोऽग्रे भवन्सन्, अग्रे

---

पाठा०—१ अकामतः; अतस्ततः. २ सुरा अदान्तस्य पराभवार्तिम् ; सुदुःसहं तस्य पराभवं तम्. ३ तस्य. ४ नियोगम्. ५ सन्नन्दनम्. ६ एनम्. ७ द्वितयैक. ८ भविष्णुः. ९ सुधिया विधाता.

भूत्वेत्यर्थः। समूलं सकुटुम्बपरिवारमुत्खाय निहत्य दुःखापहारं दुःखविनाशं विधत्ते कुरुते, त्वन्नन्दनं विनास्माकं दुःखसमूहः केन निवार्यत इति भावः ॥ ५० ॥

**महाहवे नाथ! तवास्य सूनोः शस्त्रैः[1] शितैः कृत्तशिरोधराणाम्।**
**महासुराणां रमणीविलापैर्दिशो दशैता मुखरीभवन्तु ॥ ५१ ॥**

महाहव इति ॥ हे नाथ! महाहवे महति सङ्ग्रामेऽस्य पुरोवर्तिनस्तव सूनोः पुत्रस्य शितैस्तीक्ष्णैः शस्त्रैः करवालादिभिः कृत्तशिरोधराणां कर्तितग्रीवाणां महासुराणां दैत्यानां तारकपक्षाश्रयिणां रमणीनां विलापैर्वैधव्यप्रयुक्तप्रलापैरेता दश दिशो मुखरीभवन्तु वावदूका भवन्तु। 'मुखरो वावदूकेऽपि' इति मेदिनी। 'खमुखकुञ्जेभ्यो रः' ( वा० ३१९८ ) इति रप्रत्ययः ॥ ५१ ॥

**महारणक्षोणिपशूपहारीकृते[2]ऽसुरे तत्र तवात्मजेन।**
**बन्दिस्थितानां सुदृशां करोतु वेणिप्रमोक्षं[3] सुरलोक एषः ॥ ५२ ॥**

महेति ॥ हे भगवन्! तत्रासुरे तारके तवात्मजेन पुत्रेण महती या रणक्षोणिः संग्रामभूमिस्तत्र ये पशवः क्रोष्ट्र्यादयस्तेषामुपहारीकृत उपदीकृते सति। 'उपहारश्चोपदायाम्' इति मेदिनी। एष सुरलोको बन्दिर्बन्धनागारं तत्र स्थितानां सुदृशां स्वरमणीनां वेणिप्रमोक्षं वेणीमोचनं करोतु ॥ ५२ ॥

**इत्थं सुरेन्द्रे वदति स्मरारिः सुरारिदुश्चेष्टितजातरोषः।**
**कृतानुकम्पस्त्रिदशेषु तेषु भूयोऽपि[4] भूताधिपतिर्बभाषे ॥ ५३ ॥**

इत्थमिति ॥ सुरेन्द्रे महेन्द्र इत्थं वदति सति सुरारिस्तारकस्तस्य दुश्चेष्टितमपराधजनकश्चेष्टाविशेषस्तेन हेतुना जातरोष उत्पन्नामर्षः स्मरारिर्भूतानामधिपतिर्हरः। तेषु त्रिदशेषु कृतानुकम्पो विहितदयः सन्। 'कृपा दयानुकम्पा स्यात्' इत्यमरः। भूयोऽपि पुनरपि बभाष उवाच ॥ ५३ ॥

**अहो अहो देवगणाः सुरेन्द्रमुख्याः[5]! शृणुध्वं वचनं ममैते[6]।**
**विचेष्टते शंकर एष[7] देवः कार्याय सज्जो भवतां सुताद्यैः[8] ॥ ५४ ॥**

अहो इति ॥ 'अहो अहो' इति संबोधने। संभ्रमे द्विरुक्तिः। हे देवगणाः

---

पाठा०—१ शरैः. २ क्षोणिपशूपहारे. ३ वेणिप्रमोकम्. ४ सः. ५ सुरेन्द्रमुखाः. ६ ममैतत्. ७ एव. ८ सकलं शुभाय; सकलैः शुभार्त्रैः.

सुरेन्द्रमुख्याः पुरंदरप्रधानाः ! एते यूयं मम वचनं श्रृणुध्वं श्रृणुत । तदेव सार्धद्वयेनाह—एष शंकरो देवः सुताद्यैः पुत्रप्रभृतिभिः, पुत्रपौत्रादिभिरित्यर्थः । भवतां युष्माकं कार्याय, कार्यं कर्तुमित्यर्थः । 'क्रियार्थ—' (पा० २।३।१४) इत्यादिना चतुर्थी । सज्जः सिद्धो विचेष्टते, वर्तेत इत्यर्थः । मम पुत्रपौत्रजनकतायामपि भवत्कार्यमेव बीजमिति भावः ॥ ५४ ॥

**पुरा मयाकारि गिरीन्द्र[1]पुत्र्याः प्रतिग्रहोऽयं नियतात्मनापि ।**
**तत्रै[2]ष हेतुः खलु तद्भवेन वीरेण यद्व[3]ध्यत एष शत्रुः ॥ ५५ ॥**

पुरेति ॥ हे देवाः ! पुरा पूर्वं नियतात्मनापि योगिनापि मया गिरीन्द्रपुत्र्या अयं प्रतिग्रह आदानम्, परिणयनमित्यर्थः । यदकारि कृतः । तत्रैष हेतुर्निमित्तम् । खलु । निश्चितम् । यद्यस्मादेष शत्रुस्तारकसंज्ञकस्तद्भवेन पार्वतीजन्मना वीरेण वध्यते हन्यते, अतस्तद्भवार्थं पार्वतीपरिग्रहः कृत इति भावः । अतोऽहं भवतामुपालम्भपात्रं नेति श्लोकतात्पर्यम् ॥ ५५ ॥

**अ[4]त्रोपपन्नं त[5]दमी नियुज्य कुमारमेनं पृतनापतित्वे ।**
**नि[6]घ्नन्तु शत्रुं सुरलोकमेष भु[7]नक्तु भूयोऽपि सुरैः स[8]हेन्द्रः ॥ ५६ ॥**

अत्रेति ॥ तत्तस्मादमी भवन्तोऽत्र भवत्कार्य उपपन्नं युक्तम्, योग्यमित्यर्थः । तथाभूतमेनं कुमारं पृतनापतित्वे सैनापत्ये नियुज्य नियुक्तं कृत्वा शत्रुं तारकं निघ्नन्तु । एतत्साहाय्येन भवन्तस्तारकं मारयन्त्विति भावः । अत एष इन्द्रः सुरेन्द्रः सुरैः सह भूयोऽपि पुनरपि सुरलोकं स्वर्गं भुनक्तु पालयतु । आशिषि लोट् ॥ ५६ ॥

**इत्युदीर्य भगवांस्त[9]मात्मजं घोरसंगरमहोत्सवोत्सुकम् ।**
**[10]नन्दनं हि [11]जहि दे[12]वविद्विषं संयतीति निजगाद शंकरः ॥ ५७ ॥**

इतीति ॥ शंकरः शंकरसंज्ञको भगवानिति पूर्वोक्तमुदीर्योच्चार्य घोरो भीमः 'घोरं भीमं भयानकम्' इत्यमरः । यः संगरः सङ्ग्रामः स एव महोत्सवो महाना-

---

पाठा०—१ गिरीशपुत्र्याः. २ एकहेतुः. ३ हन्यते. ४ अथ. ५ इतः; अतः. ६ निहन्तु; निहत्य. ७ पुनातु; लभेत. ८ सुरेन्द्रः. ९ स्वम्. १० नन्दनैर्हि. ११ जय. १२ देवविद्विषः.

गन्दस्तत्रोत्सुकमुत्कण्ठितमत एव नन्दनमानन्दकरम् । 'नन्दिग्रहि–' ( पा. ३।१।१३४ ) इति ल्युः । तमात्मजं कुमारम्, 'हे पुत्र ! संयति सङ्ग्रामे देवानामिन्द्रादीनां विद्विषं विशेषेण द्वेष्टारं तारकं जहि' । 'हन्तेर्जः' ( पा. ६।४।३६ ) इति हनो जादेशः । इति निजगादोक्तवान् हि । रथोद्धतावृत्तम् ॥ ५७ ॥

शासनं पशुपतेः स[1] कुमारः स्वीचकार शिरसावनतेन ।
सर्वथैव पितृभक्तिरतानामेष एव परमः खलु धर्मः ॥ ५८ ॥

शासनमिति ॥ स कुमारः कार्तिकेयः पशुपतेः पितुर्हरस्य शासनमाज्ञामवनतेन नम्रीकृतेन शिरसा स्वीचकार, स्वीयं चकारेत्यर्थः । 'कृभ्वस्तियोगे–' ( पा. ५।४।५० ) इति च्विः । 'अस्य च्वौ' ( पा. ७।४।३२ ) इतीकारः । 'च्वौ च' ( पा. ७।४।२६ ) इति दीर्घः । तथा हि—सर्वथैव सर्वप्रकारेणैव पितृभक्तौ जनकश्रद्धायां रतानां सक्तानां खल्वेष एव परमो धर्मः यदाज्ञां झटित्येव स्वीकुर्वन्तीति । स्वागतावृत्तम् ॥ ५८ ॥

असुरयुद्धविधौ विबुधेश्वरे[2] पशुपतौ वदतीति तमात्मजम्[3] ।
गिरिजया मुमुदे सुतविक्रमे सति न नन्दति का[4] खलु वीरसूः ५९

असुरेति ॥ विबुधेश्वरे सकलदेवस्वामिनि पशुपतौ हरे । असुरस्य तारकस्य यो युद्धविधिः सङ्ग्रामकरणं तत्र, उक्तमिति शेषः । तमात्मजं पुत्रमिति वदति सति । गिरिजया पार्वत्या मुमुदे प्रसेदे । तथा हि–'खलु' निश्चये, सुतविक्रमे पुत्रपराक्रमे सति का वीरसूर्वीरप्रसूतिः स्त्री न नन्दति ? अपि तु सर्वा अपि नन्दन्तीत्यर्थः । पुत्रविषये पराक्रमसत्त्वैव परमसुखकारणं वीरसूनां भवतीति भावः । द्रुतविलम्बितं वृत्तम्—'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥ ५९ ॥

सुरपरिवृढः प्रौढं वीरं कुमारमुमापते-
र्बलवदमरारातिस्त्रीणां दृगञ्जनभञ्जनम्[6] ।
जगदभयदं सद्यः प्राप्य प्रमोदपरोऽभव-
द्ध्रुवमभिमते पूर्णे को वा मुदा न हि माद्यति ॥ ६० ॥

पाठा०—१ तु. २ विबुधेश्वरः. ३ वदति प्रियमात्मजम्; वदति प्रियपुत्रकम्; वदति प्रियमातृकम्. ४ न किमु. ५ संयति. ६ दृगञ्जनभञ्जकम्.

सुरेति ॥ सुराणां परिवृढः परिशास्तेन्द्रः । 'वृहू उद्यमने' । कर्तरि क्तः । प्रौढमतिशयं वीरं पराक्रमशालिनं बलवान् योऽमरारातिस्तारकासुरस्तस्य स्त्रीणां दृगञ्जनस्य दृष्टिकज्जलस्य भञ्जनं भञ्जकम् । कर्तरि ल्युट् । मृतभर्तृकतया कज्जलधारणस्यानुचितत्वादिति भावः । अत एव जगद्भ्योऽभयदमभयदातारमुमापतेर्हरस्य कुमारं पुत्रं प्राप्य सद्यः सहसा प्रमोदे प्रकृष्टोन्मोदे पर आसक्तोऽभवज्जातः । तथा हि—अभिमते मनोरथे पूर्णे सति मुदा प्रीत्या निमित्तेन को वा न माद्यति? अपि तु सर्व एवोन्मत्तो भवतीत्यर्थः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः । इदं हरिणीछन्दः; 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात् ॥ ६० ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये कुमार-
सैनापत्यवर्णनं नाम द्वादशः सर्गः ।

---

## त्रयोदशः सर्गः ।

प्रस्थानकालोचितचारुवेषः स स्वर्गिवर्गैरनुगम्यमानः ।
ततः कुमारः शिरसा नतेन त्रैलोक्य[1]भर्तुः प्रणनाम पादौ ॥ १ ॥

प्रस्थानेति ॥ ततोऽनन्तरं स कुमारः कार्तिकेयः प्रस्थानकाल उचितो योग्यश्चारुश्च वेषो यस्य । तथा स्वर्गिवर्गैरिन्द्रादिदेवगणैरनुगम्यमानः सन् । नतेन शिरसा त्रैलोक्यभर्तुः शिवस्य पादौ प्रणनाम नमश्चक्रे । 'उपसर्गादसमासेऽपि' (पा. ८।४।१४) इति णत्वम् ॥ १ ॥

जहीन्द्रशत्रुं समरेऽमरेशपदं स्थिरत्वं नय वीर! वत्स! ।
इत्याशिषा तं प्रणमन्तमीशो मूर्धन्युपाघ्राय मुदाभ्यनन्दत् ॥ २ ॥

जहीति ॥ प्रणमन्तं नमस्कुर्वन्तं तं कुमारमीशो हरो मुदा प्रीत्या मूर्धन्युपाघ्राय गन्धमुपादाय 'हे वीर! हे वत्स! समरे युधीन्द्रशत्रुं तारकं जहि मारय ।

---

पाठा०—१ त्रिलोक.

अथामरेशपदमिन्द्रपदं स्वर्गं स्थिरत्वं स्थैर्यं नय प्रापय' । उभयत्राप्याशिषि लोट् । इत्येवंभूतयाऽऽशिषाशीर्वादेनाभ्यनन्ददस्तौषीत् ॥ २ ॥

प्रह्वीभवन्नम्रतरेण मूर्ध्ना नमश्चकाराङ्घ्रियुगं[1] स्वमातुः ।
तस्याः प्रमोदाश्रुपयःप्रवृष्टि[2]स्तस्याभवद्वीरवराभिषेकः ॥ ३ ॥

प्रह्वीति ॥ स कुमारः प्रह्वीभवन्नम्रीभवन्सन्, नम्रतरेण मूर्ध्ना । अत्र प्रह्वीभवन्नित्यनेनैव मूर्ध्नो नम्रत्वे सिद्धे पुनर्विशेषणोपादानं सामान्यतोऽन्येषामङ्गानां नम्रत्वोक्त्यपेक्षया मूर्ध्नि क्रियातिशयद्योतनार्थम्, पुनरुपादानेन तरब्ग्रहणलिङ्गाच्च । स्वमातुरङ्घ्रियुगं चरणद्वन्द्वं नमश्चकार । तस्याः पार्वत्याः संबन्धीनि यानि प्रमोदाश्रुपयांसि तेषां प्रवृष्टिर्वर्षणं तस्य कुमारस्य वीरेषु वरस्य श्रेयसः, सेनापतेरित्यर्थः । तस्याभिषेक इव योऽभिषेकः सोऽभवत् । तस्य यादृगभिषेको भवति स मात्रश्रुपयोवृष्टिरा शिरश्चरणनखपर्यन्तं प्लावयन्त्यभूदिति भावः ॥ ३ ॥

तमङ्कमारोप्य सुता हिमाद्रे[3]राश्लिष्य[4] गाढं सुतवत्सला सा ।
शिरस्युपाघ्राय जगाद शत्रुं जित्वा कृतार्थीकुरु[5] वीरसूं माम् ॥ ४ ॥

तमिति ॥ सुते पुत्रे वत्सला कृपावती सा हिमाद्रेः सुता पार्वती तं पुत्रम् । अस्य ल्यबन्तत्रयेण संबन्धो विधेयः । अङ्कमुत्सङ्गम् । 'अङ्को रूपकभेदाङ्कचिह्ने रेखाविभूषणे । रूपकाण्डान्तिकोत्सङ्गस्थानेऽङ्कं पापदुःखयोः' इति मेदिनी । आरोप्य संस्थाप्य । तथा गाढं दृढं यथा तथा । 'प्रगाढः कृच्छ्रदृढयोः' इति मेदिनी । प्रेति त्रित्वसंघातनिवेशनायैव । एवं विना तदलाभात् । आश्लिष्यालिङ्ग्य । तथा शिरस्युपाघ्राय च । 'हे वत्स! त्वं शत्रुं तारकं जित्वा वीरं सूते सा वीरसूस्तथोक्ता मां कृतार्थीकुरु' इति जगाद । एवंविधे महति कार्ये भवता प्रतिपादिते सति त्रैलोक्यं प्रसृतिशीलेन यशसा धवलीकृतं सत् 'एष यदीयः पुत्रः सा कृतार्थैव' इति जनो वर्णयिष्यतीत्यतो मत्कृतार्थत्वं सिद्धमेवेति भावः ॥ ४ ॥

उद्दामदैत्येश[6]विपत्तिहेतुः श्रद्धालुचेताः समरोत्सवस्य[7] ।
आपृच्छ्य भक्त्या गिरिजागिरीशौ ततः प्रतस्थेऽभि दिवं कुमारः ५

उद्दामेति ॥ ततोऽनन्तरमुद्दाम उद्भटो यो दैत्येशस्तारकस्तस्य विपत्तिर्मृत्यु-

पाठा०—१ युगं सः; युगाय. २ प्रपूरः; प्रवर्षः. ३ महाद्रेः. ४ आश्लिष्टगात्रम्. ५ कृतार्थां कुरु. ६ दैतेय. ७ समरोद्धुरः सः. ८ त्रिदिवम्.

स्तस्या हेतुः कारणम्, तत्कर्तेत्यर्थः । तथा समरोत्सवस्य सङ्ग्रामरूपस्योत्सवस्य 'मह उद्धव उत्सवः' इत्यमरः । इयं कर्मणि षष्ठी । संबन्धमात्रविवक्षितत्वात् । इह षष्ठ्यन्तस्य वृत्तिगतेनापि 'श्रद्धा'शब्देन नित्यसंबन्धवशात्संबन्धं कृत्वा कृद्योगलक्षणा षष्ठी समर्थनीया । केचित्तु 'समरोत्सवे सः' इति विषयलक्षणसप्तम्यन्तत्वमङ्गीकृत्य पठन्ति । तत्रापि समासवृत्तिगतस्य 'श्रद्धालु'शब्दस्य संबन्धो दुर्घट इत्यलम् । श्रद्धालु भक्तिशीलं चेतो यस्य, सङ्ग्रामश्रद्धाधायक इत्यर्थः । एवंभूतः कुमारो भक्त्या भक्तिपूर्वकं गिरिजागिरीशौ पितरावापृच्छ्य, 'मया गम्यते' इत्युक्त्वेत्यर्थः । दिवमभि प्रतस्थे चचाल । 'समवप्रवि–' ( पा. १।३।२२ ) इत्यात्मनेपदम् ॥ ५ ॥

**देवं महेशं गिरिजां च देवीं ततः प्रणम्य त्रिदिवौकसोऽपि ।**
**प्रदक्षिणीकृत्य च नाकनाथपूर्वाः[1] समस्तास्तमथानुजग्मुः[2] ॥ ६ ॥**

देवमिति ॥ ततोऽनन्तरम् । नाकनाथपूर्वा इन्द्रप्रमुखाः समस्तास्त्रिदिवौकसो देवा अपि । पूर्वोक्तकुमारप्रस्थानसमुच्चायकः 'अपि'शब्दः । 'अपि संभावनाप्रश्नशङ्कागर्हासमुच्चये' इति विश्वः । महेशं देवं गिरिजां देवीं च प्रणम्य । अथ प्रदक्षिणीकृत्य, प्रदक्षिणौ परिक्रमणवशात्सव्यभागस्थौ कृत्वेत्यर्थः । 'ऊर्यादिच्विडाचश्च' ( पा. १।४।६१ ) इति गतिसंज्ञकतया 'कुगतिप्रादयः' ( पा. २।२।१८ ) इति समासत्वात् 'समासेऽनञ्पूर्वे–' ( पा. ७।१।३७ ) इति क्त्वो ल्यबादेशः । तं कुमारमनु पश्चाज्जग्मुरित्यर्थः ॥ ६ ॥

**अथ व्रजद्भिस्त्रिदशैरशेषैः[3] स्फुरत्प्रभाभासुरमण्डलैस्तैः[4] ।**
**नभो[5] बभासे परितो[6] विकीर्णं दिवापि नक्षत्रगणैरिवोग्रैः ॥ ७ ॥**

अथेति ॥ अथानन्तरं व्रजद्भिर्गच्छद्भिरत एव स्फुरत्प्रसरत्प्रभायाः कान्त्याः संबन्धि भासुरं दीप्यमानं मण्डलं चक्रवालं येषाम् । 'चक्रवालं तु मण्डलम्' इत्यमरः । तैरशेषैः संपूर्णैस्त्रिदशैर्देवैर्विकीर्णं व्याप्तं नभोऽन्तरिक्षं दिवापि दिनेऽपि । उग्रैर्भासुरैर्नक्षत्रगणैर्विकीर्णमिव । बभासे । भासुरत्वरूपसाधारणधर्मेण त्रिदशविकिरणविशिष्टे नभसि नक्षत्रविकिरणविशिष्टत्वोत्प्रेक्षणादुत्प्रेक्षालंकारः । ननु 'उग्रः

---

पाठा०—१ सुरेशमुख्याः सुराः. २ अभिजग्मुः. ३ सरोषैः. ४ मण्डलभासुरैः. ५ ततः. ६ हरितोऽवकाशः.

शूद्रासुते क्षत्राद्युद्रे पुंसि त्रिपूत्कटे' इति कोशोक्त्योत्कटवाचिनोऽप्युग्रशब्दस्य कथं भासुरवाचकतेति चेत्,–सत्यम्; अत्रौत्कट्यं केनचिद्धर्मेण विवक्षितं, न तु तेजसैव। कान्त्या तापेन वा सौन्दर्यादिना वोत्कटोऽधिक इत्यर्थप्रणयनाश्रकृते समाधेयम् ॥ ७ ॥

**रराज तेषां व्रजतां सुराणां मध्ये कुमारोऽधिककान्तिकान्तः।**
**नक्षत्रताराग्रहमण्डलानामिव त्रियामारमणो नभोन्ते ॥ ८ ॥**

**रराजेति** ॥ नभोन्तेऽन्तरिक्षमध्ये व्रजतां गच्छतां तेषां सुराणां मध्ये कुमारः कार्तिकेयः। अग्रेऽपि नभोन्त इत्यस्य संबन्धः कार्यः। नक्षत्राण्यश्विन्यादीनि, ताराः सप्तविंशतिव्यतिरिक्ताः, ग्रहाः सूर्यादयो नव, तेषां मण्डलानां गोलानां मध्ये त्रियामारमणश्चन्द्र इव रराज। यतोऽधिककान्त्या कान्तो मनोहरः। नक्षत्राणां मध्ये यथा चन्द्र एव शोभते तथा देवानां मध्ये कुमार एव शुशुभ इत्यर्थः। पूर्णोपमालंकारः ॥ ८ ॥

**गिरीशगौरीतनयेन सार्धं पुलोमपुत्रीदयितादयस्ते।**
**उत्तीर्य नक्षत्रपथं मुहूर्तात्प्रपेदिरे लोकमथात्मनीनम् ॥ ९ ॥**

**गिरीशेति** ॥ अथ पुलोमपुत्री शची तस्या दयित इन्द्रः स आदिर्येषां तथाभूतास्ते देवा गिरीशगौरीतनयेन। ननु गिरीशगौर्योरेकतरेण सिद्धिरिति चेत्,–सत्यम्; उभयगतवीर्याश्रयीभूतत्वेन कुमारवीर्याधिक्यस्य द्योतनार्थमुभयग्रहणमिति समाधातव्यम्। सार्धं मुहूर्तात्क्षणमात्रेणैव नक्षत्रपथमाकाशमुत्तीर्योल्लङ्घ्यात्मनीनमात्मने हितम्। 'तस्मै हितम्' (पा. ५।१।५) इत्यधिकारस्थेन 'आत्मन्विश्वजन–' (पा. ५।१।९) इत्यनेन खः। तथाभूतं लोकं स्वर्गं प्रपेदिरे प्रापुः। 'लोकस्तु भुवने जने' इत्यमरः ॥ ९ ॥

**ते स्वर्गलोकं चिरकालदृष्टं महासुरत्रासवशंवदत्वात्।**
**सद्यः प्रवेष्टुं न विषेहिरे तत्क्षणं व्यलम्बन्त सुराः समग्राः ॥ १० ॥**

**त इति** ॥ ते समग्राः सुरा महासुरात्तारकाद्यस्त्रासो भयं तस्य वशंवदत्वाद्-

---

**पाठा०**—१ अधिककान्तकान्तिः. २ दयितः. ३ अन्तः. ४ मुहूर्तम्. ५ अथो मुनीनाम्. ६ तम्. ७ समस्ताः.

धीनत्वाद्धेतोः चिरकालेन बहुसमयेन दृष्टं स्वर्गलोकं सद्यः सहसा प्रवेष्टुं न विषेहिरे न शेकुः । तत् किं तु क्षणं व्यलम्बन्त, कालं चिक्षिपुरित्यर्थः । अन्योऽपि सभये स्वगृहेऽपि सद्यः प्रवेष्टुं न शक्नोति, किं तु विलम्बते तद्वदिति भावः ॥ १० ॥

पुरो[1] भव त्वं न पुरो भवामि नाहं[2] पुरोगोऽस्मि पुरःसरस्त्वम्[3] ।
इत्थं सुरास्तत्क्षणमेव[4] भीताः स्वर्गं प्रवेष्टुं कलहं वितेनुः ॥ ११ ॥

पुर इति ॥ तत्क्षणम् । 'कालाध्वनोः–' (पा. २।३।५) इति द्वितीया । प्रवेशसमय इत्यर्थः । भीता अतस्तारकावस्थानशङ्कया सभयाः सुराः स्वर्गं प्रवेष्टुम् 'त्वं पुरोऽग्रे भव, अहं पुरो न भवामि, किं तु त्वमेव भव, अहं पुरोगो नास्मि न भवामि । त्वं पुरःसरो भव' इत्थमेवंभूतं कलहं विग्रहं वितेनुः, चक्रुरित्यर्थः । अस्मीत्यहमर्थकमव्ययम् । सर्वेषां त्रिधाभूततया न कोऽप्यन्तः प्रवेष्टुं शशाक, किं तु तत्रैव परस्परं कलहायमानास्तस्थुरिति भावः ॥ ११ ॥

सुरालयालोकनकौतुकेन[5] मुदा शुचिस्मेरविलोचनास्ते[6] ।
दधुः कुमारस्य मुखारविन्दे दृष्टिं द्विषत्साध्वसकातरान्ताम्[7] ॥ १२ ॥

सुरालयेति ॥ सुरालयस्य स्वर्गस्य यदालोकनं तेन यत्कौतुकमानन्दस्तेन निमित्तेन शुचीनि शुद्धानि स्मेराणि समन्दहासानि च विलोचनानि येषां तथाभूतास्ते देवा द्विषत्साध्वसेन तारकशत्रुभयेन कातरान्तां भीतप्रान्ताम्, भयचिह्नतरलत्वादियुतामित्यर्थः । तथाभूतां दृष्टिं नेत्रं मुदा प्रीत्या, प्रसादेनेति यावत् । उपलक्षिते कुमारस्य मुखारविन्दे वदनकमले दधुः । दुर्घटप्रवेशोपायोपदेशापेक्षयेति भावः । कुमारो बालोऽपि सन् न भीत इति मुदेति विशेषणेन व्यज्यते ॥ १२ ॥

सहेलहासच्छुरिताननेन्दुस्ततः[8] कुमारः पुरतो भविष्णुः[9] ।
स तारकापातमपेक्षमाणो[10] रणप्रवीरो हि[11] सुरानवोचत् ॥ १३ ॥

सहेलेति ॥ ततो दृष्टिपातानन्तरं रणे प्रकृष्टं वीरोऽत एव तारकस्यापातं

---

**पाठा०**—१ पुरो द्यत त्वम्. २ नवः. ३ पुरःसर त्वम्. ४ द्विषा तेन कृते स्ववश्ये स्वर्गे; द्विषा तेन हृता मिथस्ते स्वर्गे. ५ सुरत्वरा. ६ सुविस्मेरविलोचनस्य; सुविस्मेरविलोचनान्ताः. ७ कातरास्ते; कातरान्ते. ८ उद्धरित; उच्छुरित. ९ निविष्टः. १० अवेक्षमाणः. ११ अभि.

युद्धार्थमागमनमपेक्षते सोऽपेक्षमाणः, प्रतीच्छन्नित्यर्थः । अत एव पुरतोऽग्रतो भविष्णुः स कुमारः कार्तिकेयः सहेलः सक्रीडो यो हासस्तेन च्छुरिताननेन्दुर्मिश्रितमुखचन्द्रः सन्, किंचिद्विहस्येत्यर्थः । हि निश्चितम् । सुरानवोचज्जगाद ॥ १३ ॥

भीत्यालमद्य त्रिदिवौकसोऽमी स्वर्गं भवन्तः प्रविशन्तु सद्यः ।
अत्रैव मे दृक्पथमेतु शत्रुर्महासुरो वः[1] खलु दृष्टपूर्वः[2] ॥ १४ ॥

भीत्येति ॥ भो त्रिदिवौकसो देवाः ! अद्य संप्रति भीत्या भयेनालम्, न भेतव्यमित्यर्थः । किं त्वमी भवन्तः सद्यः सहसैव स्वर्गं प्रविशन्तु, स्वर्गप्रवेशे भयहेतुको विलम्बो न विधेय इति तात्पर्यम् । सद्यः सपदि । तत्क्षणमित्यर्थः । अथ रोषादाह—पूर्वं दृष्टो दृष्टपूर्वः । 'राजदन्तादिषु–'( पा. २।२।३१ ) इति प्राक्प्रयोगार्हस्य 'पूर्व'शब्दस्य परः प्रयोगः । संभवानुरोधाद्भवद्भिरिति लभ्यते । ननु व इत्यनेनैव सिद्धिरिति चेन्न । 'न लोक-' ( पा. २।३।६९ ) इति षष्ठीनिषेधात् । तथा वो युष्माकं शत्रुर्द्वेष्टा महासुरस्तारकोऽत्रैव स्वर्गं एव मे मम दृक्पथं दृग्गोचरत्वमेतु प्राप्नोतु । दृक्पथमिति 'ऋक्पूरब्धूः–' ( पा. ५।४।७४ ) इति समासान्तोऽप्रत्ययः ॥ १४ ॥

स्वर्लोक[3]लक्ष्मीकचकर्षणाय दोर्मण्डलं वल्गति[4] यस्य चण्डम् ।
इहैव तच्छोणितपानकेलिमह्नाय कुर्वन्तु शरा ममैते ॥ १५ ॥

स्वर्लोकेति ॥ स्वर्लोकस्य लक्ष्म्याः कचाः केशास्तेषां कर्षणाय । लक्ष्मीकेशानां हरणं कर्तुमित्यर्थः । 'तुमर्थात्–' ( पा. २।३।१५ ) इति चतुर्थी । चण्डं प्रचण्डं यस्य तारकस्य दोर्मण्डलं भुजमण्डलं वल्गति चलति । तस्य तारकस्य यच्छोणितं रुधिरं तस्य पानं तदेव केलिः क्रीडा तां कर्मभूतामेते मम शरा अह्नाय झटिति । 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः । इहैव कुर्वन्तु । तं विनाशयन्त्वित्यर्थः ॥ १५ ॥

शक्तिर्ममासावहतप्रचारा प्रभावसारा सुमहःप्रसारा[5] ।
स्वर्लोकलक्ष्म्या[6] विपदावहारेः शिरो[7] हरन्ती दिशतान्मुदं[8] वः १६

शक्तिरिति ॥ अहतप्रचाराऽविघ्नितगतिः । तथा प्रभावः सामर्थ्यं स एव

पाठा०—१ यः. २ कालदष्टः. ३ स्वर्गैकलक्ष्मी. ४ यस्य बलातिचण्डम्. ५ सुमहाप्रसारा. ६ लक्ष्मीः. ७ सहारिशिरः; सहारेः शिरः. ८ दिशतां सुखम्.

सारो यस्याः। सुतरां महसस्तेजसः प्रसारो मण्डलं यस्याः, अतितेजस्विनीत्यर्थः। स्वर्लोकलक्ष्म्या या विपदा तस्या अवहा, किं तु सुखदेत्यर्थः। तथारेः प्रतिकूलस्य शिरः शीर्षं हरन्ती। असौ मम शक्तिरायुधं वो युष्माकं मुदं प्रीतिं दिशताद्दत्तात्। आशिषि लोट्॥ १६॥

इत्यन्धकारातिसुतस्य दैत्यवधाय युद्धोत्सुकमानसस्य।
सर्वं शुचिस्मेरमुखारविन्दं गीर्वाणवृन्दं वचसाननन्द॥ १७॥

इतीति॥ दैत्यवधाय दैत्यवधं कर्तुं युद्ध उत्सुकमानसस्योत्कण्ठितचेतसोऽन्धकारातिसुतस्य शिवपुत्रस्य कुमारस्य संबन्धिना इति पूर्वोक्तेन वचसा सर्वं गीर्वाणवृन्दं देवसमूहः शुचि शुद्धं स्मेरं समन्दहासं मुखारविन्दं मुखकमलं यस्य तथाभूतं सत् आननन्द जहर्ष॥ १७॥

सान्द्रप्रमोदात्पुलकोपगूढः सर्वाङ्गसंफुल्लसहस्रनेत्रः।
तस्योत्तरीयेण निजाम्बरेण निरुञ्छनं चारु चकार शक्रः॥ १८॥

सान्द्रेति॥ सान्द्रप्रमोदाद्घनानन्दाद्धेतोः पुलकै रोमाञ्चैरुपगूढ आश्लिष्टः। 'पुलकः कृमिभेदेऽश्मभेदे च मणिदोषके। रोमाञ्चे हरिताले गजान्नपिण्डे च गन्धके' इति मेदिनी। तथा सर्वेष्वङ्गेषु संफुल्लानि सहस्रनेत्राणि यस्य। यतः सहस्राक्षस्तथाभूतः शक्र इन्द्रस्तस्य कुमारस्योत्तरीयेण संव्यानेन। 'संव्यानमुत्तरीयं स्यात्' इत्यमरः। तथा निजाम्बरेण निरुञ्छनं परिवर्तनं चारु चकार, भ्रातृभावायान्योन्यवस्त्रग्रहणं चक्रतुरित्यर्थः। तदुक्तं मेदिन्याम्—'निरुञ्छनं बन्धुतायै वाससः परिवर्तनम्' इति। लोकेऽपि भ्रातृतायै परस्परस्योष्णीषबन्धनव्यवहारस्तद्वदत्रापीति। अनुशासने सामान्यतो वासोग्रहणेन प्रकृत उत्तरीयग्रहणं संगच्छते। लोकव्यवहारस्तु संप्रदायसिद्धः। उष्णीषे विशेषश्रैष्ठ्योपलम्भ एव व्यवहारमूलमिति मन्तव्यम्॥ १८॥

घनप्रमोदाश्रुतरंगिताक्षैर्मुखैश्चतुर्भिः प्रचुरप्रसादैः।
अथो चुचुम्बे विधिराद्यवृद्धः षडाननं षट्सु शिरःसु चित्रम्॥ १९॥

---

पाठा०—१ बद्धोत्सवमानसस्य. २ सुविस्मेर. ३ आननन्द. ४ सान्द्रप्रमोदः. ५ संलग्न. ६ निर्मञ्छनम्; निरूहणम्, निरुञ्छनम्. ७ परिप्लुताक्षैः. ८ प्रमोद. ९ क्रमाच्चुचुम्बे; अथो अचुम्बद्विधिरादिवृद्धः. १० मुखेषु. ११ हर्षात्. १२ सुसाधु.

घनेति ॥ अथो अनन्तरमाद्ययोर्हरिहरयोर्द्वन्द्वो महानिधिर्ब्रह्मा। घनः सान्द्रः। 'घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः। ना मुस्तादौ घनाधेषु विस्तारे लोहमुद्गरे। त्रिषु सान्द्रे च दृढार्थे' इति मेदिनी। यः प्रमोदो हर्षस्तेन निमित्तेन यदश्रु नेत्रपयस्तेन तरंगितानि संजाततरंगाणि। 'तारकादिभ्य इतच्' (पा. ५।२।३६) अक्षीणि नेत्राणि येषां तैः, हर्षवशादुद्गताश्रुभिरित्यर्थः। तथा प्रचुरप्रसादैरधिकप्रसन्नतायुक्तैश्चतुर्भिर्मुखैः षट्सु शिरःसु मध्ये षडाननं कुमारं चुचुम्बे पस्पर्श। इति चित्रं विस्मयः। चतुर्भिर्मुखैः षण्णां मुखानां यौगपद्येन स्पर्शासंभवात्। परिहारस्तु प्रत्येकं षट्सु चतुर्भिश्चुम्बनेन संधेयः ॥ १९ ॥

तं[1] साधु साध्वित्यभितः प्रशस्य मुदा कुमारं त्रिपुरासुरारेः।
आनन्दयन्वीर! जयेति वाचा गन्धर्वविद्याधरसिद्धसंघाः ॥ २० ॥

तमिति ॥ गन्धर्वा देवगायकाः, विद्याधराः, सिद्धाश्च देवविशेषाः, तेषां संघाः समुदायाः कर्तारः तं त्रिपुरासुरस्यारेः शिवस्य कुमारं पुत्रं मुदा प्रीत्या निमित्तेन साधु साध्वित्यभितः संमुखत्वेन प्रशस्य स्तुत्वा 'हे वीर! त्वं जय शत्रोः सकाशाज्जयं प्राप्नुहि' इत्येवंभूतया वाचानन्दयन्नानन्दितमकुर्वन् ॥ २० ॥

दिव्यर्षयः शत्रुविजेष्यमाणं तमभ्यनन्दन्[2]किल नारदाद्याः।
निरुञ्छनं[3] चक्रुरथोत्तरीयैश्चामीकरीयैर्निजवल्कलैश्च[4] ॥ २१ ॥

दिव्यर्षय इति ॥ नारदाद्या नारदप्रमुखा दिव्या दिवि भवा ऋषयः। 'द्युप्रागपागुदक्-' (पा. ४।२।१०१) इति यत्। शत्रुं तारकं विजेष्यमाणं जेष्यन्तं तं कुमारमभ्यनन्दंस्तुष्टुवुः किल। अथानन्तरं चामीकरीयैः सौवर्णैरुत्तरीयैर्वस्त्रैः। तथा निजैर्वल्कलैश्च निरुञ्छनं बन्धुतायै वासःपरिवर्तनं चक्रुः। निरुञ्छनं पूर्वमेव निर्णीतम् ॥ २१ ॥

ततः सुराः शक्तिधरस्य तस्यावष्टम्भतः साध्वसमुत्सृजन्तः[5]।
उत्सेहिरे स्वर्गमनन्तशक्तेर्[6]गन्तुं वनं यूथपतेरिवेभाः ॥ २२ ॥

तत इति ॥ ततोऽनन्तरं शक्तिरायुधविशेषस्तां धरतीति तथोक्तस्य कुमारस्य।

---

पाठा०—१ तस्य वचो वरार्थम्. २ समभ्यनन्दन्; तदभ्यनन्दन्. ३ निर्मञ्छनम्; निरुच्छनम्. ४ नववल्कलैः. ५ उत्त्यजन्तः. ६ अनन्तशक्त्यै. ७ अभिपृष्ठे.

'शक्तिरस्त्रान्तरे शौर्ये उत्साहादौ बले स्त्रियाम्' इति मेदिनी । अवष्टम्भत आश्रयतः । 'अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि' इति मेदिनी । अत्र 'स्तम्भ' शब्देनाश्रयो लक्षितः; स्तम्भस्याश्रयमिति तत्त्वात् । साध्वसं भयम् । 'भीतिर्भीः साध्वसं भयम्' इत्यमरः । उत्सृजन्तस्त्यजन्तः सुरा देवाः । अनन्तशक्तेरपारशौर्यस्य यूथपतेर्गजराजस्यावष्टम्भत इभा गजा वनमिव । स्वर्गं गन्तुं प्रवेष्टुमुत्सेहिर उत्साहं चक्रुः । 'अनन्तशक्तेः' इति विशेषणं कुमारेऽपि योजनीयम् ॥ २२ ॥

**अथाभिपृष्ठं गिरिजासुतस्य पुरंदरारातिवधं चिकीर्षोः ।**
**सुरा निरीयुस्त्रिपुरं दिधक्षोरिव स्मरारेः प्रमथाः समन्तात् ॥२३॥**

अथेति ॥ अथोत्साहानन्तरं सुराः पुरंदरस्येन्द्रस्यारातेस्तारकस्य वधं मृत्युं चिकीर्षोः कर्तुमिच्छोर्गिरिजासुतस्य कुमारस्याभिपृष्ठं पृष्ठसंमुखं त्रिपुरं दैत्यं दिधक्षोर्दग्धुमिच्छोः । 'दह भस्मीकरणे' इति धातोरिच्छार्थे सनि 'सन्यङोः' (पा. ६।१।९) इति द्वित्वे 'सनाशंसभिक्ष उः' (पा. ३।२।१६८) इत्युप्रत्ययः । स्मरारेः शिवस्याभिपृष्ठं प्रमथा इव स्थिताः समन्तान्निरीयुर्निर्जग्मुः, अन्तर्विविशुरित्यर्थः ॥ २३ ॥

**सुराङ्गणानां जलकेलिभाजां प्रक्षालितैः संततमङ्गरागैः ।**
**प्रपेदिरे पिञ्जरवारिपूरां स्वर्गौकसः स्वर्गधुनीं पुरस्तात् ॥ २४ ॥**

सुराङ्गणानामिति ॥ स्वर्गौकसो देवाः पुरस्तादग्रे जलकेलिभाजां जलक्रीडासक्तानां सुराङ्गणानामप्सरसां संततं निरन्तरं प्रक्षालितैरङ्गरागैः कुङ्कुमादिरचितैः पिञ्जरवारिपूरां पीतजलप्रवाहां स्वर्गधुनीं मन्दाकिनीं प्रपेदिरे प्रापुः । सुराङ्गणानामिति 'कुमति च' (पा. ८।४।१३) इति णत्वम् ॥ २४ ॥

अथ चतुर्भिस्तामेव "दिग्दन्तिनाम्" इत्यादिभिर्विशिनष्टि—

**दिग्दन्तिनां वारिविहारभाजां कराहतैर्भीमतरैस्तरङ्गैः ।**
**आप्लावयन्तीं मुहुरालवालश्रेणिं तरूणां निजतीरजानाम् ॥ २५ ॥**

तत्र दिग्दन्तिनामिति ॥ किंभूतां स्वर्गधुनीम् ? वारिणि विहारभाजां क्रीडतां

---

**पाठा०**—१ जयम्. २ सुराङ्गनानाम्. ३ विहारलीलाम्. ४ भीमवराहयूथैः । आशंसयन्सादरमद्रिपुत्रीमहेशपुत्राय पुरःपुरोगाः । स कार्तिकेयः पुरतः परीतो वियच्चरैर्लोलतैरस्तरंगैः. ५ श्रेणीः; श्रेणीम्. ६ गुरुतीरजानाम्.

दिग्दन्तिनामैरावतादीनां करैः शुण्डादण्डैः । 'करो वर्षोपले पाणौ रश्मौ प्रत्यय-शुण्डयोः' इति मेदिनी । आहतैस्ताडितैरत एव भीमतरैरतिशयभयानकैस्तरङ्गैः कल्लोलैः कृत्वा निजतीरजानामात्मीयतटोत्पन्नानां तरूणां वृक्षाणां संबन्धिनीमालवालानां मूलस्थलीनां श्रेणिम् । 'श्रेणिः स्त्रीपुंसयोः पङ्क्तौ समाने शिल्पिसंहतौ' इति मेदिनी । मुहुर्वारंवारम् । 'मुहुः पुनःपुनः शश्वत्' इत्यमरः । आप्लावयन्तीं सेचयन्तीम् ॥ २५ ॥

**लीला[1]रसाभिः सुरकन्यकाभिर्हि[2]रण्मयीभिः सिकताभिरुच्चैः ।**
**माणिक्यगर्भाभिरु[3]पाहिताभिः प्रकीर्णतीरां वरवेदिकाभिः ॥ २६ ॥**

लीलेति ॥ पुनः किंभूताम्? लीलायां क्रीडायां रसः प्रीतिर्यासां ताभिः सुराणां कन्यकाभिः पुत्रीभिः । तथा हिरण्मयीभिः सौवर्णीभिः सिकताभिर्वालुकाभिः तथा माणिक्यगर्भाभिर्मणिखचितमध्याभिः तथोपाहिताभिर्निर्मिताभिः, न त्वकृत्रिमाभिः । तथोच्चैर्महतीभिर्वराः श्रेयस्यो या वेदिकास्ताभिश्च प्रकीर्णतीरां व्याप्तसैकताम् ॥ २६ ॥

**सौरभ्यलुब्धभ्रमरोपगीतैर्हिरण्यहंसावलिकेलिलोलैः ।**
**चामीकरीयैः कमलैर्विनिद्रैश्च्युतैः परागैः परि[5]पिङ्गतोयाम् ॥ २७ ॥**

सौरभ्येति ॥ पुनः किंभूताम्? सौरभ्ये सौगन्ध्ये लुब्धा लम्पटा ये भ्रमरा द्विरेफास्तैरुपगीतैः, मुखरितैरित्यर्थः । हिरण्यस्य सुवर्णस्य ये हंसा मरालास्तेषामावल्यः पङ्क्तयस्तासां केलिः क्रीडा तया निमित्तेन लोलैश्चञ्चलैश्चामीकरीयैः सौवर्णैर्विनिद्रैर्विदलितैः कमलैरुपलक्षिताम् । अत एव च्युतैः कमलेभ्यो भ्रष्टैः परागैः सुमनोरजोभिः । 'परागः सुमनोरजः' इत्यमरः । परिपिङ्गं परितः पीतं तोयं जलं यस्यास्तथोक्ताम् ॥ २७ ॥

**कुतूहलाद्द्रष्टुमुपागताभिस्तीर[6]स्थिताभिः [7]सुरसुन्दरीभिः ।**
**[8]अभ्यूर्मिराजि प्रतिबिम्बिताभिर्मुदं दिशन्तीं व्रजतां जनानाम् ॥ २८ ॥**

कुतूहलादिति ॥ द्रष्टुं कुतूहलात्कौतुकात्, आनन्दादिति यावत् । उपा-

---

**पाठा०**—१ लीलालसाभिः. २ हिरण्यहंसाभिरुताभिः; हिरण्यजाभिः सिकताभिः. ३ उपोहिताभिः. ४ अवकीर्णैः. ५ परिपिञ्जतोयाम्. ६ तीरे स्थिताभिः. ७ सुरकन्यकाभिः. ८ अभ्यूर्मिराजीः; अत्यूर्मिराजि.

गताभिरागताभिः। अत एव तीरस्थिताभिः। अत एवाभ्यूर्मिराजि। ऊर्मिराजावित्यभ्यूर्मिराजि तरङ्गमध्ये प्रतिबिम्बिताभिः सुरसुन्दरीभिर्देवाङ्गनाभिर्निमित्तेन व्रजतां गच्छतामपि जनानां मुदं दिशन्तीं ददतीम्। एतासामप्यप्सरसां प्रतिबिम्बवशादनेकधा दृश्यमानत्वाद्युक्ता प्रीतिजनकतेति भावः ॥ २८ ॥

ननन्द सद्यश्चिरकालदृष्टां विलोक्य शक्रः सुरदीर्घिकां ताम्।
अदर्शयत्सादरमद्रिपुत्रीमहेशपुत्राय ततः पुरोगः ॥ २९ ॥

ननन्देति ॥ शक्र इन्द्रश्चिरकालेन बहुकालेन दृष्टां तां सुरदीर्घिकां मन्दाकिनीं विलोक्य सद्यो झटिति ननन्द जहर्ष, अतिरमणीयं वस्तु चिरकालदृष्टं सद्बहुप्रीतिजनकं भवतीति भावः। ततोऽनन्तरमद्रिपुत्रीमहेशयोः पुत्राय कुमाराय सादरं यथा तथा पुरोगः सन्नदर्शयत् ॥ २९ ॥

स कार्तिकेयः पुरतः परीतः सुरैः समस्तैः सुरनिम्नगां ताम्।
अपूर्वदृष्टामवलोकमानः सविस्मयः स्मेरविलोचनोऽभूत् ॥ ३० ॥

स इति ॥ समस्तैः सुरैः परीतो व्याप्तः स कार्तिकेयः कुमारः। अपूर्वदृष्टाम्, अधुनैव दृष्टामित्यर्थः। तां सुरनिम्नगां पुरतोऽग्रेऽवलोकमानः सन् सविस्मयः साश्चर्यः स्मेरविलोचन समन्दहासनेत्रश्चाभूत् ॥ ३० ॥

उपेत्य तां तत्र किरीटकोटिन्यस्ताञ्जलिर्भक्तिपरः कुमारः।
गीर्वाणवृन्दैः प्रणुतां प्रणुत्य नम्रेण मूर्ध्ना मुदितो ववन्दे ॥ ३१ ॥

उपेत्येति ॥ भक्तिपरो भक्तिप्रवीणः कुमारः कार्तिकेयो गीर्वाणवृन्दैर्देवसमूहैः प्रणुतां प्रकर्षेण स्तुताम्। 'णु स्तुतौ' इति धातोः कर्मणि क्तः। तां मन्दाकिनीं तत्रोपेत्य, तत्समीपं गत्वेत्यर्थः। किरीटकोटौ मुकुटाग्रे। 'कोटिः स्त्री धनुषोऽग्रेऽस्त्री' इति मेदिनी। अत्र 'अग्र'शब्दस्य धनुःशब्दोपलक्षिततया सर्वेषामग्रवाचकत्वं बोध्यम्। न्यस्तोऽञ्जलिर्येन तथाभूतः सन्। प्रणुत्येडयित्वा मुदितो मुमुदे। इदं कृदन्तरूपं क्रियापदम्। तथा नम्रेण मूर्ध्ना शिरसा ववन्दे नमश्चक्रे ॥ ३१ ॥

प्रणर्तितस्मेरसरोजराजिः पुरः परीरम्भमिलन्महोर्मिः।
कपोलपालिश्रमवारिहारी भेजे गुहं तं सरितः समीरः ॥ ३२ ॥

पाठा०—१ शक्रः. २ सद्यः. ३ पुरः. ४ पुरोज्ञः. ५ इव लोकमानः. ६ सविस्मय. ७ रत्नकिरीट. ८ प्रणताम्. ९ नमितः; प्रणतः. १० प्रपाटित. ११ स्वःसरितः.

प्रणर्तितेति ॥ प्रणर्तिता कम्पिता स्मेरसरोजानां विकसितकमलानां राजिर्माला येन । अनेन सौगन्ध्योक्तिः । तथा परीरम्भेणाश्लेषेण मिलन्त आत्मनि मिश्रीभवन्तो महोर्मयो यस्य । अनेन शैत्योक्तिः । कपोलपाल्याः, कपोलरूपलताग्रस्येत्यर्थः । 'पालिः कर्णे लताग्रेऽश्रौ' इति विश्वः । श्रमेण यद्वारि स्वेदस्तस्य हारी । अनेन मान्द्योक्तिः । अन्यथा श्रमहृतेरसंभवः । एवंभूतः सरितो मन्दाकिन्याः समीरः पवनः पुरोऽग्रे स्थितं तं गुहं स्वामिकार्तिकेयम् । यद्वा पुरोऽग्रे भेजे सिषेवे ॥ ३२ ॥

ततो व्रजन्नन्दननामधेयं लीलावनं जम्भजितः पुरस्तात् ।
विभिन्नभग्नोद्धृतशालसंघं प्रेक्षांचकार स्मरशत्रुसूनुः ॥ ३३ ॥

तत इति ॥ ततो गङ्गावलोकनानन्तरं व्रजंश्चलन् स्मरशत्रुसूनुः कुमारः पुरस्तादग्रे विभिन्नो विदारितः, बाणैः शतरन्ध्रीकृत इति तात्पर्यार्थः । तथा भग्न आमर्दितो मूलं विनोपर्येव शतशकलीकृत उद्धृत उत्पाटितश्च शालसंघो यस्य तत् । 'शालो हाले मत्स्यभेदे शालौकस्तत्प्रभेदयोः । शालद्रुस्कन्धशाखायां शालेति परिकीर्तिता ॥' इति मेदिनी । नन्दननामधेयं नन्दनसंज्ञकम् । 'नन्दनं वनम्' इत्यमरः । जम्भजित इन्द्रस्य लीलावनमुपवनं प्रेक्षांचकार ददर्श । 'इजादेश्च–' (पा. ३।१।३६) इत्याम् ॥ ३३ ॥

सुरद्विषोपप्लुतमेवमेतद्वनं बलस्य द्विषतो गतश्रि ।
इत्थं विचिन्त्यारुणलोचनोऽभूद्भ्रूभङ्गदुष्प्रेक्ष्यमुखः स कोपात् ॥ ३४ ॥

सुरद्विषेति ॥ स कुमारः । एतत्पुरोवर्ति बलस्य द्विषत इन्द्रस्य । अत्र 'न लोक–' (पा. २।३।६९) इत्यादिना षष्ठीनिषेधेऽपि 'द्विषः शतुर्वा' (वा० १५२२) इति विकल्पात्षष्ठी । वनमुपवनं सुरद्विषा तारकेणैव, न केनापि । यथा तारकेणोपद्रुतं तथा न केनापीत्यवधारणार्थकैवकारेण ध्वन्यते । 'एव प्रकारोपमयोरङ्गीकारावधारणे' इति विश्वः । अभितः सर्वतः । उपप्लुतमुपद्रुतमत एव गतश्रि नष्टशोभमित्थं विचिन्त्य कोपादरुणे लोचने यस्य तथोक्तो भ्रूभङ्गेन दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तथोक्तश्चाभूत् । महतां सति स्वस्मिन्परदुःखं महादुःखावहं भवतीति भावः ॥ ३४ ॥

---

पाठा०—१ जवात्. २ वज्रभृतः. ३ उन्नतशाखि. ४ एव. ५ दुष्प्रेक्षमुखः. ६ च.

